तदा विसृष्टः सकथं चिदम्बया पितु समीपं प्रतिगन्तु मैहत ।
तदन्वगच्छत्सहसैव लक्ष्मणो न जातु संकल्पमृते मनोगति ॥ ५१
अथ तौ चलकाकपक्षकौ विलसत्कुण्डलविष्फुरत् कपोलौ ।
उपसन्नतुरानतौ सुदूरात् प्रतिहारप्रतिपादितौ गुरू तौ ॥ ५२
विपुलपुलकान्तरेण दोष्णा मुनिरथ तौ परिरभ्य मूर्ध्नि चुम्बन् ।
अलभत निगमान्तकौतुकाना किमपि रहस्य मनर्गलं प्रमोदम् ॥५३

राजाऽपि वाष्पजल धौत-मुखेन्दु पालि—
स्तौचारुलाञ्छनभृतो करयोगृहीत्वा ।
जानासि मे खलु यथेति वचोऽर्द्ध मुक्त्वा
किंचिन् मुनेरभिमुखं न शशाक वक्तुम् ॥ ५४

इति श्री मार्कण्डेयमिश्रविरचिते दशग्रीववधे महाकाव्ये
श्रीरामसमर्पण नाम चतुर्थ सर्ग ॥

# अथ पञ्चम. सर्गः

अथोपमार्ज्जी न्मुनिरस्रमक्ष्णो सस्नेहमालिग्य महीमहेन्द्रम् ।
आशीर्भिराद्राक्षरया च वाचा चकार संस्तम्भितशोकवेशम् ॥ १
तत परं कार्मुकमात्रमित्रौ मुनिर्गृहीत्वामनुजेन्द्रपुत्रौ ।
पार्श्वप्रतिस्थापितचन्द्र-सूर्य्य सजङ्गमो मेरुरिव प्रतस्थे ॥ २
राजारघूणा सहजं प्रभावं महायक तस्य मुनेश्च पश्यन् ।
प्रयातयोरात्मजयोस्तदानी रक्षार्थमन्यं न दिदेश सैन्यम् ॥ ३
अनुप्रयातो रघुनन्दनाभ्या तपोवनाभ्यासयथामुखीन ।
स कर्म्मणा ज्ञान-विजृम्भितेन विराजितो वेद इवावभासे ॥ ४
कुमार-सदर्शन सभ्रमेण वलात् कृताना नगरी जनानाम् ।
विसृज्य कार्य्याणि तदोचितानि रथ्यासु रथ्यासु चकार पुञ्ज' ॥ ५
तयोस्तदावीक्ष्य वपु किशोरं तथाविधं च व्यवसायतत्त्वम् ।
अन्योन्य-मुत्कपितमौलिचित्त-मेवं वभाषे मिलितो जनौघ ॥ ६
इमौ यदासेचनकावकार्षीत् पुन किमिन्दु' सृजतिस्म वेधा' ।
स्थाने पुरस्तादिदमेनयोर्हि निर्माणमेतस्य कलङ्कि शिल्पम् ॥ ७
स एव वशो जगतीषु धन्यस्तावेव मन्ये पितरौ कृतार्थौ ।
एवं विधं वैधसशिल्पलक्ष्मी सामन्तरत्न' यदपत्यमास्ते ॥ ८
ये ऋष्यशृङ्गाय चरोविलासी वृद्धस्य राज्ञस्तनया वभूवु ।
तेषामिमावाद्य तृतीयभूतौ दिष्ट्या रघूणा तपसा विभूति ॥ ६
क्व दुग्धकण्ठौ तनयौ नृपस्य क्व रक्षण राक्षसत क्रतूनाम् ।
अहो कठोरं हृदय रघूणा मुनिश्च वृद्धोऽप्यसमीक्षकारी ॥ १०
विहारखिन्नेन निरस्तशक्रमनेन य क्षेप्तुमियेष रक्ष. ।
अरण्यसेकेन सरोरुहस्य ध्रुवं स निर्वापयिता दवाग्ने. ॥ ११

किं नाम मातापि नतावदासीत्तदा मुनि प्रार्थयिता क्षितीशम् ।
श्रमासहौ कन्दुक-कौतुकाना युद्धार्थमेव प्रहिताविमौ यत् ॥ १२
विलोक्यता लक्ष्मण एष राम मन्येति हस्तेकृतचारुचाप ।
रसानशेषानतिशोक एव-महोऽनुसौभ्रात-मभेदवृत्ति ॥ १३
अनुद्गतश्मश्रुतयाभिरामं कुमारयोर्वाक्ष्य मुखारविन्दम् ।
का नाम धन्या कुलपालिकानां गोष्ठीषु वक्त्रीनिजमुन्नयेत ॥ १४
अप्रीतपूर्वं वदनं वधूना वक्षोश्चकासे कुचसङ्गशून्यम ।
समीक्ष्य संवीक्ष्य मनोममेदं मात क्षणेनैव किमेवमास्ते ॥ १५
शक्यं मनोहर्त्तुमुपाययोगान्मनस्विनीभि-र्महतामपि स्यात् ।
पराङ्गना खेदयता रघूणामन्यादृशी हन्त कुलस्य रेखा ॥ १६
रूपं रघूणामिव वह्निपुष्पं सत्यं प्रमोहाय ससर्ज वेधा. ।
पूर्वं यथा संस्मरणेऽपितीव्रं संदर्शनेष्वप्यपरं न तादृक ॥ १७
एवं विधा पौरविलासिनीना गिरश्चिरं श्रोत्रपथं नयन्तौ ।
स्मेराननौ तौ मुनिमन्वयाता विवेकसपन्नमिवार्थधर्म्मौ ॥ १८
कच्छेन कच्छेन तरङ्गिणीना मध्येन मध्येन वनस्पतीनाम् ।
कथा विचित्रा कथयन्मुरारि-मुनिस्तदा वत्सलया चकर्ष ॥ १९
आजन्म ये राजगृहे निवासीदिमौ वनग्रामविलोकलोलौ ।
तथाविधाना मुपदर्शनेन रतिर्मुनीना रमयावभूव ॥ २०
छायातपत्रै स्थगितान्तरीक्षै र्मृदङ्गधीरैर्मृदुभि स्वनैश्च ।
तुषारकल्पैर्पयसा पृपद्भिस्तावम्बुवाहा सुखयाम्बभूवु ॥ २१
तयोर्नभस्वानुपनीय गन्धा-नुर स्फुटीना वनकेतकीनाम् ।
संवीजयामास तनुं प्रसून स्रवन्नरण्यैरिव पल्लवाग्रै ॥ २२
इत. फलं पुष्पमितो यथेच्छमादीयतामित्युपदर्शयन्त ।
मन्दानिलालोलनवप्रबालै राकारयामासुरिव द्रुमास्तौ ॥ २३
तनूलतीकृत्य फलं प्रसूनं प्रबालहस्तै र्विनिवेदयन्त· ।
नम्रैः शिरोभिर्वन देवता स्ता-वपूपुजन् गुप्ततयापि नूनम् ॥ २४

विभिन्नपद्मावलिलब्धवासं प्रसन्नमम्भः प्रतिपादयन्त्य ।
नद्यश्च सद्यश्चलदूर्मिहस्तैः पाद्यं तयोर्दातुमिव प्रवृत्ता. ॥ २५
शाखासु शाखामृगचेष्टितेन स्थलीषु नानामृगसंभ्रमेण ।
नदीषु मत्तद्विजकूजितेन प्रवास दौस्थित्यमपासतुस्तौ ॥ २६
जघ्नु सलीलं विकसत्प्रसूनै शाखाभुजैरञ्चलमप्यगृह्णन ।
तयोर्विशन्त्यो नवपल्लवोष्ठं लता सकामा इव जातकम्प ॥ २७
बने बने निक्कणता खगानामालापकौतूहल - निस्तरंगै. ।
फल-प्रवालस्तवकै स्तरूणा विस्तारयन्तौ वपुषो विभूषाम् ॥ २८
मृगद्विजानां वनपादपानामापृच्छ्यमानौ मुनिराजमाख्या ।
दूरेऽपिवर्त्मन्यविरन्तुमिच्छा संचारिणौ राजसुतावभूताम् ॥ २९
तयो प्रवासेऽपि कथाप्रसादं विलोक्य पित्रोरिव सन्निधाने ।
प्रीत प्रियं कर्त्तुमना मुनीन्द्रस्तटं तत शारयवं प्रपेदे ॥ ३०
आचम्य वाञ्छाप्रदमम्बु तस्मिन् स्वर्गापगामत्सर निर्विशङ्कम ।
ददौ वला चातिवला च विद्या तयो र्निसृष्टं वलमेध्ययिष्यन ॥ ३१
तयो प्रभावान्नृप-पुत्रयोश्च वीर्यं तदा सातिशयं वभूव ।
निशीथमध्यंदिनयो प्रसङ्गाच्चन्द्रार्कयो पार्वणयोरिवार्चि ॥ ३२
तलेषु किञ्चित्तपनातपेषु मधुश्च्युतामाश्रम - पादपानाम् ।
नाति प्रचण्डेऽपि सहस्ररश्मौ प्रकल्पयामास मुनिर्निवासम् ॥ ३३
योगेन नीतैरपि संविधाना तै स्तैः प्रकारैरगृहीतचित्तौ ।
तौ वन्यभोगेऽपि परं प्रसक्तावलब्धपूर्वप्रवणं हि चेत ॥ ३४
आतन्वती तल्पमनल्पपुष्पै राधुन्वती पल्लव-तालवृन्तम् ।
वाचालभृङ्गै. कुमुदैरनिद्रै राचारिताः प्राहरिक-प्रयासा. ॥ ३५
नक्तं च नक्तंचरकाललब्धा निर्दिश्यमाना वनदेवताभिः ।
ताबोषधी-ज्योतिरुदीर्णदीपा विहङ्गगीतेन वनी षिषेवे ॥ ३६

युग्मकम्

प्रातस्तरा मङ्गलमुत्क्कणद्भि-र्विहङ्गमैर्भावित-वन्दिकृत्यौ ।
हतानकौ कुञ्जरकर्णतालै. प्रातिष्टता कौशिकदिक्षु मार्गे ॥ ३७

अथोपसर्पद्भिरतिप्रमोदात् कृताशिपो राघवयोर्मुनीन्द्रै ।
पाथेयभाव नयतो सुधाभ ते प्रस्तुतं चारुयशो रघूणाम् ॥ ३८
प्रक्षुभ्यदम्भोधिपराहताशमितस्ततः प्रान्तकणाखिषण्डम् ।
उत्कम्पमानाचलमान्तविश्वं किमग्य भूद्वै कृतमप्रमेयम् ॥ ३९

युग्मकम्

किमेतदित्याकुलचित्तवृत्ति - र्जनो विनिश्चेतु मलं न यावत् ।
तावद्बभाषे परमार्थदृष्ट्या महामुनिर्वाच - मतिस्फुटार्थाम् ॥ ४०
इयं पुरा यक्षवधूर्विधातु र्वैरेण नागायुतघोरवीर्य्या ।
शापान्मुने राक्षसतामवाप्य वधाय जागर्ति तपोवनानाम् ॥ ४१
स्वप्नप्रलापेष्वपि ताडकेति यन्नामवर्णान्मुनयोऽधिगत्य ।
उपेक्ष्य वह्नीननपेक्ष्य दारान्मुक्तोत्तरीया ककुभो द्रवन्ति ॥ ४२
सेयं शुभैरेव तपोवनाना त्वदन्तिकं धावति सावलेपम् ।
तनूनपाति स्वयमेवपात पतङ्गिकाया निधने निदानम् ॥ ४३
तत्सावधानं धनुरादधान प्राणैरिमा वत्स वियोजयेथा. ।
इयं मुनीना किल कालरात्रि न त्वाततायिन्यनुकम्पनीया ॥ ४४
तत्रान्तरे विस्फुरदन्तसूत्रस्यूतै· कपोलै कृतकण्ठहाराम् ।
वातोपनीतै र्मुखपूतिगन्धै - रावेष्टि ता गृध्रगणैर्विदूरात् ॥ ४५
कृतान्त जिह्वायतपीवराभ्या मधान्तनिर्मूलित पादपाभ्याम् ।
प्रेङ्खोलयाभ्या मभित स्तनाभ्यामुत्पात वात्यामिव मूत्रयन्तीम् ॥ ४६
स्वपादनिर्द्धूतरजो विधूम्रै शिरस्त्रजालै परितोविकीर्णै ।
ज्वलिष्यतो रामशरैरसूना धूमावलीं वक्त्रमिवोद्वहन्तीम् ॥ ४७
हिंसाछलीवन्धन-पञ्जराभं दंष्ट्रावितानं दधता मुखेन ।
उल्कापदेशान्मुहूरुद्वमन्तीं ज्वालाकपाला निजरोषमग्ने· ॥ ४८
ता वीक्ष्य संत्रासवता मुनीना-मार्त्तिस्वनैर्नर्त्तनमावहन्तीम् ।
स्त्रीघातलज्जामपि राघव सन्नह्लाघनं तादृगमुं स्मराम. ॥ ४९
ततः सुमित्रातनयोपनीतं रामे धनु कुण्डलयत्यखेदम् ।
रक्षो ललाटेपु शुभाक्षराणि गूढं विधि कुण्डलया बभूव ॥ ५०

धनुष्मतस्तस्य करारविन्दे पदं यदा प्राप स कोऽपि वाणः ।
तदैव सुन्दासुरवल्लभाया प्राणा स्थिति कण्ठतटे चकाक्षु ॥ ५१
अथक्षणादेव गभीरनादं पपात तद्वक्षसि रामवाणः ।
पृष्ठे भुवि प्रोषितजीविता च नक्तंचरीमुक्तमहाविरावा. ॥ ५२
तत. किरीटे रघुनन्दनस्य पपात विद्याधरपुष्पवृष्टि ।
पुलस्त्यनप्तु पुनराश्रयन्त्या साम्राज्यलक्ष्म्या नववाष्पवृष्टि. ॥ ५३
तथावदानं दनुजान्तकस्य विलोकयन् विस्मयनीयमुच्चै. ।
दिदेश तस्मै दितिजन्नमस्त्रं प्रमोदमेव स्वमना मुनीन्द्र· ॥ ५४
लब्ध्वा तदस्त्रं स वभूव रामो विशेपतो विद्विपतामसह्य. ।
निदाघभाजा बनपादपाना झञ्झानिलं प्राप्य यथा दवाग्नि ॥ ५५
इति स्व दो कन्दलकौतुकेन चिरान्निराकृत्य भयं मुनीनाम् ।
सहानुजः कौशिकवंशरत्न-मनु प्रतस्थे मनुजेन्द्रसूनुः ॥ ५६
तत प्रपेदे त्रिपुरारिशत्रो स्तपोवनं पुष्पशरासनस्य ।
प्रशास्ति विश्वम्भसितेऽपि देहे यस्यायुधं भ्रूमयमङ्गनानाम् ॥ ५७
तपस्विनस्तत्र तयोरुदार शोभाविशेषं नयनै पिवन्तः ।
प्रागीशरोषादपि मन्मथस्य रूपप्रशंसा ह्रियमाद्रियन्ते ॥ ५८
अयं सवाल किल ताडकाया· कायापहारीति मुहुर्वचोभि. ।
तथापि पश्यन्नविशेपदृष्ट्या विशेषत श्चारुचमत्चकार ॥ ५९
पुरा पुनातिस्म वनं यथेदं स पञ्चमश्चक्रभृतोऽवतार. ।
तथा युवा पादसरोजसङ्गा-दितिस्मृतौ सस्मित माह लोकः ॥ ६०
तत परं प्राप दुरापतापं तपोवनं दीर्घतपो महर्षे ।
य· स्पर्द्धयाभालविलोचनस्य पादारविन्दे दृशमुच्चकार ॥ ६१
अथाक्षपादप्रणयानुरोधा—दनुज्ञया गाधिसुतस्य राम· ।
आतिथ्यसत्कारमुरीकरिष्यन् सहानुजस्तत्र निवासमैषीत् ॥ ६२
स तपोवन - रामणीयकेन द्रुतमाकृष्ट इव क्षण वभूव ।
कुतुकावसरं च तस्य पश्यन्ननुजज्ञे नयनेन गाधिसूनु· ॥ ६३

चरतो मुनिदारकैः सखेलं रघुसूनोश्चरणाब्जरेणुसंगात् ।
उदियाय शिलातलादनल्पद्युतिनिष्ठ्यूतदिगन्तरालमर्चि ॥ ६४

दूरान्निमील्य नयने गलितोत्तरीयं
स्तोकेषु तत्र वटुषु प्रपलायितेषु ।
एतत् किमित्यववदत्सु जनेषु तेज-
स्तत्पर्यणंस्त वनिता वपुषैव सद्य ॥ ६५
सप्रत्यभिज्ञमिव पश्यति गाधिपुत्रे
व्रीडातिरेकवलवद्विनमन्मुखेन्दुम् ।
श्रीराम - पादरजसा - हृतशीलदोपा
ता गौतमश्च गृहिणीं विधयेऽनुमेने ॥ ६६

विस्मेरास्तमुपेत्य तत्र मुनय श्लाघाचलन्मौलयो-
राशिर्वादपरम्परा फलभरामित्थं मुहु प्रोचिरे ।
रत्नं यद् भुवनत्रयस्य सुषुवे कल्पात्मकं भूरीयं
सत्यं तेन समेत्य काचन रुचि ध्येया जगद्भूतये ॥ ६७

इति श्री मार्कण्डेयमिश्रविरचिते दशग्रीववधे महाकाव्ये
अहल्यानुग्रहो नाम पञ्चम सर्ग ॥

# अथ षष्ठः सर्गः

अथ दाशरथी सदा प्रसन्नैर्मुनिभि प्रस्तुतविक्रमानुभावौ ।
चिरमुत्सुकशिष्य दर्शिताध्वा भगवानाश्रममात्मनो निनाय ॥ १
मुदितौ कृत मङ्गलान् प्रदेशे गुरुदाराश्चरणे प्रणेमतु स्तौ ।
अपि ता विजयाशिष दिशन्त करुणार्द्रा॰ शिरसि द्वयोरजिघ्रन् ॥२
भगवानपि तौ निधाय पत्नी भरमुह्यन्निव निर्ववार सद्य ।
कृतिनामपि विश्वसन्ति पुसा न मनासि स्वयमङ्कुतोपचारे ॥ ३
अथ साधु निरूपिते मुहूर्त्ते क्रतुरक्षासु नियुज्य राजपुत्रौ ।
कृतिशिष्यकृतोरुसंविधानो वृतऋत्विग् मुनिरासमाद दीक्षाम् ॥ ४
रघुराजसुताकृति क्रतूना फलदो यत्र पर पुमान सहाय ।
इतरस्त्रिजगद्विधान शूरो भगवान् गाधिसुतश्च यत् प्रयोक्ता ॥ ५
विरह-व्यथमान-देवराज प्रियदारप्रतिपालितावसाने ।
महति क्रतु कर्मणि त्रिलोकी महिते तत्र तथा प्रवर्त्तमाने ॥ ६
युग्मकम्
विकसन्नवबन्धु जीवशोणश्चरमाम्भोधिजले पतत् पतङ्ग॰ ।
भुजदुर्मदयातुधानमुक्त क्रतुवेदिषु च शोणितोद्भार ॥ ७
स्वकुलाय तरुनथोपसेदु-र्विरुवन्तस्तुमुलं विहङ्गसङ्घा ।
पिशिताशनभीषिताश्च दूरात् मुनयस्तानि निजोटजोदराणि ॥ ८
गगने विचकाशिरे समन्ता दुडव कन्दुकदम्बकानुकारा ।
मखशालमहीषु च प्रकीर्णा पिशिताशैः परितो नरास्थिखण्डा॰ ॥ ९
अरुणत्परितो दिश क्रमेण प्रसरत् कासरभासुरोऽन्धकार ।
क्रतुविघ्न विधानमाचरिष्यन्मुनिराजस्य गृहं च राक्षसौघ ॥ १०
निमि-मील सर सु पद्मराजी मलिने रुन्धति विश्वमन्धकारे ।
उपसर्पति रक्षसा च वृन्दे चकिता लोचनसन्ततिर्मुनीनाम् ॥ ११

चिरमेकरसं रथाङ्गनाम्नो मिथुनं ध्वान्त विलोचनाद्द्विधाभूत् ।
पिशिताशन दर्शनान्मुनीना क्रतुनिर्वाहसनिश्चयं च चेत ॥ १२
मुमुदे कुमुदेन सायसंध्या रुचिराग-छुरितेन पुष्करिण्याम् ।
समरा-गमनोत्सुकेन रोषं दधता दाशरथेश्च मानसेन ॥ १३
सदसत् परिचेतु मक्षमाभूत् परितृप्ता तमसा जनस्य दृष्टि ।
इति कृत्यविधौ च तापसाना मुषिता जातुबलेन चित्तवृत्ति ॥ १४
विचचार ततस्तत' सगर्वं रविभापा विरहेण रक्षसंघ ।
असमेत्य च राघवं नियुक्तं पिशिताना प्रकरस्तपोवनेषु ॥ १५
अथ किञ्चिदलक्षत प्रतीचो प्रसरत्तामसि वैधव प्रकाश ।
अवजानत एव यातुधानान् रघुसूनोर्वदनाम्बुजे च हास. ॥ १६
तिमिरं अपनेतुमभ्युतस्या वुदितशीतकर करै-रुदारै ।
रघुराजसुतश्च राक्षसाना वलमाकाशचरं शरैरुदग्रै ॥ १७
द्विगुणीकृतशिञ्जिनीनिनादं सुरणब्द्रायित - दुन्दुभिस्वनेन ।
अथ दाशरथि दिवं विधुन्वन् विपुलं कौणपसैन्य माससाद ॥ १८
रिपव पवमान-वेगनुन्ना पयसानाथमिवापगास्तमापु ।
स च तानतिमात्रनिश्चकंप प्रमरन्ती सरितो यथा पयोधि ॥ १६
ववृषु प्रसभं च वीर्य्यभाजा विशिखै तीक्ष्णशिखै प्रमन्यवस्ते
अथ तै पवमान विप्रकीर्णै-स्तृणकै वह्निरिवाधिकं दिदीपे ॥ २०
अथ सुन्द-महासुरेन्द्रपत्नीरुधिरास्वादसमुन्मुदिष्णुमेकम् ।
समधत्त शरासने शरं च स्मयमानेन मुखाम्बुजेन राम' ॥ २१
अपि तत्र महावले रिपूणा प्रलयाम्भोनिधि-गर्भसंनिवेशे ।
त्रयमेव स तत् प्रधानभूतं गणयामास शरव्यतानुरूपम् ॥ २२
स मुमोच शरं गभीरनाद त्रसदाशागज चित् क्रिया निनादम् ।
रघुसूनुरुर स्थले सुवाहो सुरनारीकुचपत्रलोपलुब्धे ॥ २३
रतिनायकसंनिभस्य तस्य क्षतवक्षा निशितेन सायकेन ।
अपतत् पृथिवीतले सवीर सुरयोषित् कुचकुन्तले सदिव्य ॥ २४

पतिते दुहितु सुतोपमेऽस्मिन् द्विगुणीभूत सुतावधप्रकोप॰ ।
पिशिताशननाशधूमकेतु नृपपुत्रं द्रुतमापतत् सुकेतु ॥ २५
अथ तं च शरेण रामभद्र. सुरनारी-वशकर्म-कार्मुकेण ।
विनिपात्य गुरोगयादुहित्रा घुषितं प्रेक्षयतिस्म नाकलोकम् ॥ २६
रभसेन पतत्तमेवदूरादथ मारीच मुरीचकार रामः ।
मुखमुक्त-हलाहल स्फुलिगं भुजगानामिव नायकं खगेन्द्रः ॥ २७
अथ तं सविधं विधावमानं पवमानास्त्रविजृम्भितेन राम॰ ।
समुदक्षिपदार्त्त नाद-माराद्गगने शाल्मलि तूलवत् सखेदम् ॥ २८
इतरे च तदाहतावशेषा शरपक्षानिल-वेगधूयमाना ।
वलवन्मरुदुद्धतस्य भेजुस्तुलना तत्र विशीर्ण पर्णराशे ॥ २९
अथ तद्वपुराद्र्ता प्रपेदे घुषदा कौसुम-वर्षजै-रमन्दै ।
हृदयं च तपोवनस्थिताना मगतोयेन गतोन्य तद्गुणानाम् ॥ ३०
असमश्रमवारिशीकरार्द्र चिवुके तन्मुख मुन्नमय्यनम्रम् ।
मुनिराशिषमादिदेश तस्मै मुदित. कल्पलता-सधर्मवृत्ति. ॥ ३१
अथ पर्यवसायिते यथावत् सवने निष्प्रतिवन्धमेव तस्मिन् ।
मुनिनावभृथे समन्य मज्जन्महिते श्रोतसि तद्गुणे च लोकः ॥ ३२
इति रामशरैरपास्तविघ्न. परितोषात् किमपि प्रदातुमिच्छन् ।
स मुहूर्त्तमिव प्रमोदमूहे सकलास्त्र-व्यय-दुर्विधो मुनीन्द्र ॥ ३३
अथ संस्मरतिस्म तस्य योग्या सुहृदो मैथिल भूपतेस्तनूजाम् ।
विनिमन्त्र्ययितामखं विधित्सोरुपतस्थेऽस्य तदैव कोपदूत. ॥ ३४
अनुयोगमिषेण तत् कथाना पुरतो दाशरथे स्फुटीचकार ।
हरकार्म्मुक गोपणैक मूल्यं तनयारत्न-ममुष्य-गाधिसूनु. ॥ ३५
कुतुकोत्तरल च तस्य कृत्वा हृदयं कार्मुक रोपणे मुरारे ।
कुशिकस्य सुतोऽथ राघवाभ्या सह वैदेहपुरी मनुप्रतस्थे ॥ ३६
विशतो मिथिलेन्द्र राजधानीमनयोरूपविलोकनोत्सुकानाम् ।
नगरीमृगलोचनाजनाना बलवान् संभ्रम विभ्रमो वभूव ॥ ३७

अथ संरचनाय कापिमुक्ता कवरीं पाणिसरोरुहेण धृत्वा ।
मदनेन तथैव दिश्यमाना सुदती दर्शनलालसा प्रतस्थे ॥ ३८
त्वरिता हृदयेन तद्दिदृक्षा-प्रसरत्-कौतुकवर्षणेन काचित् ।
जघनस्तनभार गौरवाणा-मघवादाश्च पदे पदे व्यतानीत् ॥ ३९
वलभीशिखरस्थिता नताङ्गी रघुराजात्मजयोर्मुखं दिदृक्षु ।
विनिमय्यघनोन्नतं च काचित् कुचमालोकन निर्मितान्तरायम् ॥४०
अनपेक्षितशीलवन्धुभीति सकलस्तत्र बधूजन प्रतस्थे ।
पटु पुखितसायकेनपश्चान्मदनेनैव मुहुर्विनुद्यमान ॥ ४१
तदुपाहितमुख्यलोचनार्द्रा हठकेश - ग्रहलोल - वाहुवल्लि ।
मधुरस्मितमाद्रसीत्कृतेन प्रसभं कापि सखीमुखं चुचुम्ब ॥ ४२
अपरास्खलदंशुकं न वक्ष पृथुवक्षोरुह माववार तन्वी ।
दुरवापतया तयोर्निराशा मदनायेव जहीति निर्दिशन्नी ॥ ४३
च्युतमुग्धवतं स-मञ्जरीकं मृदुगण्डस्थललोलतालपत्रम् ।
अनयोरवलोक्य रूपलक्ष्मी स्तुवती कम्पयतिस्ममौलिमन्या ॥ ४४
तदवेक्षण–लब्धघर्मलेशे करमाधत्त परा कपोलदेशे ।
प्रतिविम्बितमङ्कं तदीयं स्पृशतिस्म स्मरखेदखण्डनाय ॥ ४५
इतरा तिलकं ददौ कपोले नयने यावकमञ्जनं वक्त्रे च ।
अति दुर्लभ कामुकीतिमत्वा मदनेन प्रसभ विडम्बितेव ॥ ४६
अपरा स्मरदुर्मनास्तदानीं हृदये पाणिसरोरुहं न्यधत्त ।
अपवारयितुं प्रसूनकेतो र्निपतन्तीमिव सन्तती शराणाम् ॥ ४७
दरलक्षितमुग्धमूलमंशे भुजवल्लीं विनिधाय-कापिसख्या ।
मसृणोत्तरला दृशं किरन्तीं स्मित भिन्नाधरपल्लवं जजृम्भे ॥ ४८
विकसत् कुचमूलवन्धमीषत् परिवृत्त त्रिवलीतरङ्गमन्या ।
दरवक्रित कन्धरास्वमङ्गं सुमुखी स्फोटयतिस्म तत् पुरस्तात् ॥ ४९
इति मन्मथ दुर्मदाभिराभि पुरनारीनिवहस्य विक्रियाभि ।
विचकार न तन्मन कथंचिद्घनमुक्ताभिरिवाम्बुराशिराभि ॥५०

अवलोकन-मन्तरेण तावानवलोके च महानयं प्रमोह॰ ।
अहह प्रमदाजनस्य जन्म प्रबलं कष्टमसृष्ट पद्मयोनि ॥ ५१
इति सन्निदधानविप्रकृष्टस्फुरदिन्दीवरलोचना च तदैव ।
हृदि राघवयो महागभीरे पतितुं तत्र वितत्र-से किमुच्चै ॥ ५२
उपगत्य यथा विधान मारान्मिथिलेन्द्रो मुनिराजमर्च्चयित्वा ।
तदुपाश्रित संकथ महर्पं परिरेभे सुहृदात्मजो नमन्तौ ॥ ५३
अनयोर्मदनातिशायि रूपं तनया-दानपणं च भूमिपाल ।
समवेक्ष्य नितान्ततान्तचेता चिरमुष्णा श्वसितच्छटाव्यतानीत् ॥५४
अथ तस्य तथाविधामवस्था परिभाव्य स्मयमान एव किंचित् ।
मनसोरुजमुत्कटा हरिष्यन्नरनाथं निजगाद गाधिसूनु ॥ ५५
हरकार्मुकरोपणायराजं श्चिरमुत्कण्ठित एष रामभद्र ।
परिपूरय कौतुकं तदस्य स्थिरमानन्दभरेण च स्वमन्त ॥ ५६
इति कौशिक वाचि मुद्रिताया स्मयमाने निभृतं तदाकनिष्ठे ।
पुलकाभरणीयरामभद्र क्षणमासीदसहायवद्विहस्य ॥ ५७
तमुवाच नृपो न वेत्मि विद्वन् कतमोऽयं सुकुमारक कुमार ।
त्रिदशैरपि दुर्नमं त्रिलोकीगुरुसारं कतमच्च कार्मुकं तत् ॥ ५८
वहवोऽपि सुरासुर-प्रवीरा गमिता येन चिरस्य दास्यभावम् ।
कथमर्भक एप तत्र धन्वी नहि तन्वी कुशसूचरश्मिरेभि॰ । ५९
अथ चेदवलोकनोत्सुकोऽयं सह यामो वयमेवतं प्रदेशम् ।
नहि सचलति स्वसंनिवेशाद्यतमानै रपि दिग्गजै र्धनुस्तत् ॥ ६०
अथ कार्मुकसंनिवेशशालामुपजग्मु कुशिकात्मजादयस्ते ।
जनकस्तु मुनीश्वरस्य वाचा धनुपा तेन च संशयाख्यदोलाम् ॥ ६१
अवलोकयतो नृपस्य राम॰ स्मयमाने जगृहे करेण सद्य ।
विषम विशिखासनं पुरारेर्मनसा सार्द्धमशेष देहभाजाम् ॥ ६२
अथ नामयितुं धनु प्रवृत्ते गुणवल्लीकलनाय रामभद्रे ।
व्यथमानफणीन्द्रमौलिजालच्यवमानं जगदेव संननाम ॥ ६३

अथ खण्डपरश्वधस्य चाप प्रसभं तस्य करेण नाम्यमान. ।
निरभज्यत सद्य एव दूरात् कलयन् खण्डविकार दण्डलीलाम् ॥६४

दीर्यद्दिक्कुम्भिकुम्भच्युतधरमचिरक्षुभ्यदब्धि प्रसर्पत्-
कल्लोलग्रस्तवेलं चलदमरगिरि प्रस्थ दु स्थादिलोकम् ।
शम्भो कोदण्ड-दण्ड त्रुटन-कटकटात् कारघोषेण विष्वग्
व्याप्त ब्रह्माण्ड भाण्डं रघुतनय भुजोद्दामधाम्ना च सद्य. ॥ ६५

इति श्री मार्कण्डेयमिश्रविरचिते दशग्रीववधे महाकाव्ये
पिनाकभङ्गोनाम षष्ठ सर्ग ॥

# अथ सप्तमः सर्गः

अथ गुरुर्भुजयोरवदानं कलयद्दृशा किमपि विस्मयनीयम्।
चिरमप्रभुर्मनस एव निजस्य स्फुरति स्म चित्रलिखित किमुलोक· ॥ १
मिथिलापतिस्तु शिथिलायित दीर्घव्यसनश्चिरेण परितोषजड· सन्।
स्वपनानुभूतिविषयादविशेषं तदशेषमेव चरितं समपश्यत् ॥ २
अथ शश्वदेव परिरभ्य रघूणा पृथुकस्य विश्वमहितं पृथु कर्म।
निरतारि संप्रति भयावहदुर्गाद् भवताचिरादिति मुनीन्द्रमनंसीत् ॥३
विजयश्रिय प्रथमपाणिगृहीत्वा अवरोधिनी ममसुताऽस्तुसपत्नी।
इति मैथिलो मुनिवरस्य पुरस्ता-न्निदिदेश दाशरथये निजपुत्रीम् ॥ ४
अथ सस्मितं निहितलोचनकोश पुलकाञ्चिते वलितरामकपोले।
हरशैलशृङ्गकृतकीर्त्तिविहार × × × कुशिकान्वय-भार । ५
कतम· समस्तमहनीयमदूरात् प्रणयं त्वदीयमभिनन्दतु धन्वः।
तदपि स्वदूतवचनेन सखाय रघुराजमर्हसि महे विनियोक्तुम् ॥ ६
वचनं निशम्य शमिन स च राजा प्रजिघाय गौतमसुतं द्रुतमस्मै।
निमिसंतति दुहितृ-दानविधानादिय-मिष्यता परिजनीति गिरं नः ॥ ७
अथ गौतमस्तिमिरवैरिकुलेन्दु· समुपागमन्नृपति मैन्दुमतेयम्।
अभिपूजित. स्वभुजनिर्जितशात्रो वृतमाशिषं निरवशेष-मुदन्तम ॥ ८
परमाद्भुतेन तनयस्य गुणेन प्रणयेन पुण्ययशसो जनकस्य।
अनुवध्नतो गुरुभिरस्य च वाग्भिर्मुदमाप काममपि नृप· प्रतिबारम् ॥ ९
अथ सादरं तदनुमत्य नरेन्द्र स्वयमन्वमोदयदुपेत्य पुरन्ध्री·।
गृहिणी प्रियकर-मपत्य-विवाहं सविशेषमुत्सवमति ननु लोकः ॥ १०
अथ सानुज भरतमार्यविवाहक्षणवीक्षणोत्सुकतमं स गृहीत्वा।
अचलत् प्रयाण-पटहध्वनिधारावधिरीकृत. त्रिदशकुञ्जरपंक्ति. ॥ ११

प्रतिहारवर्गविनिवेदितनाम्ना प्रतिपालिना हयसदा स नृपाणाम् ।
धृतवल्गपाणिपुटचुम्बितमौलि समभावयत् प्रणति संभ्रममक्ष्णा ।। १२

तमपूपुजन्मृगदृशः पटुलाजै र्मधुरैरलूलुनिनदैश्च विदूरात् ।
मुहुरक्षतै रुडुगणद्युतिचौरैः क्षितिदेवताश्च शुभदै श्रुतिपाठैः ।। १३

परिपूरयन् वसुमती-मतिवेल प्रलयाम्बुराशिरिव भीपणघोषः ।
प्रचचाल कंपितदिगन्तरनाथ पृतनाभरश्च भरणं गुरुशेष । १४

अपयात तिष्ठत न पश्यत किं भो इति दुर्विभाव-वचसा पृतनानाम् ।
रथवाजिना बहुल-निस्वनसान्द्र खमगाहत प्र हततूर्यनिनाद ।। १५

अथ नन्दिनी-श्रियमतीव-हरद्भिस्तिरयद्भिरेव जनलोचनकृत्यम् ।
मुषितार्कदीप्तिभिरकालतमोभिः परितस्तरे भुवनमेव रजोभि ।। १६

तुरगक्षुरै प्रथमत समुदस्त प्रथित स्ततो वियति केतुमरुद्भि ।
अथ पंकितो मदजलै द्विरदाना करिशीकरैस्तत इतः क्षितिरेणु ।। १७

नमिताः मतंगजघटापदजातै स्त्रुटिताः नटत्तुरगपादकलापैः ।
परिपूरिता क्षितिरजोभिरुदभ्रै समना गता विषमभूमिविभागाः ।।१८

विनियन्त्रितोऽपि श्रृणिना निशितेन प्रतिवारमुद्यमपरेण नयन्त ।
मदमेदूरः करिपतिः प्रतिनागं प्रतिहन्तुमेव रभसेन दधाव ।। १६

गिरुधातु-चित्रितविशाल-निगाल करमुक्त-शीकर करम्बित दिक्क ।
पृतनागजस्तुलयति स्म तमिस्रं धृत-सान्ध्यरागमुरुतारकपुञ्जम् ।। २०

ऋजुनम्रकेशर मुदञ्चितपुच्छं दरकुञ्चिताग्रपदमुन्नतकर्णम् ।
तुरगा प्रतेरुरनिलाध्वनि भूम्ना कियदेव गा चरमपद्भिरचुम्बन् ।। २१

नटयन् विचित्र मुररीकृतगर्वः बहु दूरवर्द्धितरयं हयमेक ।
करविभ्रमद्धवलचामरकुन्तः शितमातत तमिव खे समतानीत् ।। २२

निजपृष्ठनिस्वनित-तूर्यविनुन्नः करिसन्निधान-भयवर्द्धितवेगः ।
अपि सादिनं विवशयन् समधावीत् प्रचलत् प्रकामविपुलाधरमुष्ट्रः ।। २३

पटु बल्गितश्रमजलाद्रिकुचान्तं स्खलितावगुण्ठदरदृश्यमुखाब्जम् ।
स्वजनावरुद्ध-कविकावलयेन प्रमदाजनः प्रचलति स्म हयेन ।। २४

श्रमवारि भिन्नतिलकं पटुवल्गत् कुचकुम्भमुत्पतित-कर्णवतंसम् ।
तुरगाधिरोह-रभस-श्लथमङ्गं पुरुषायितद्युतिमलब्ध वधूनाम् ॥ २५
गजहस्तभग्नविटप पथि शाखा सविधे व्रजन्तमवलोक्य नरेन्द्रम् ।
विचलद् विश्रृङ्खल मधुव्रतमाला-विरुतेन किं वहु वदन्निज दु.खम् ॥ २६
करशीकरेण करिणश्च करेणो पतदातपग्लपितमास्यमसिंचन् ।
व्यजनैरिव श्रवणसूर्पसमीरै श्रम–मध्वलंघन–समुत्थमलुम्पन् ॥ २७
शिशिरेपु भूरुहतलेपु निषण्णां पथि खेदनि सहतमा गणिका स्वाम् ।
समवीजयत् सपुलकं विटलोक. सिचयाञ्चलेन सलिलस्तिमितेन ॥ २८
विटकण्ठसक्तभुजपल्लवमश्वादवतारिणीं दरविकासितकक्षम् ।
गणिका च्छलप्रहित-कातर-नेत्रं विचलन् महानपि जन समपश्यत् ॥ २९
न तथा तुषारपवनोऽपि जलार्द्र न च गन्धसारविसरो घनसार॰ ।
पथि खेदखण्डन विधायि विटाना प्रमदावलोकनसुखं तु यथाभूत् ॥ ३०
पथि यापयन् कतिचिदेष दिनानि प्रतिपार्थिव-प्रणतपादसरोज ।
उपपादयन्मुदमशेष-जनानामुपकारिकासु निजविश्रममैषीत् ॥ ३१
अथ संचलन्मणिमता - गतिवेग - प्रचलाचलध्वजपटेन रथेन ।
जनितोत्सव प्रतिपदं जनताना जननायको जनकराज्यमपश्यत् ॥ ३२
विरलै नृपै स परिवारतपार्श्व करपल्लवेन विदधौ विधुतेन ।
सविधोऽपगामुक-दिदृक्ष-समूह प्रतिषेधिना निजनृपा प्रतिषेधम् ॥ ३३
श्रुतवानुपागतममुं मिथिलेन्द्र स्वजनाद्रथं जवनवाजिनमुच्चै ।
समगंस्त वर्त्मनि वरेण रघूणा प्रवहत् -प्रमोद-नयनाम्बुकृतार्थ ॥ ३४
अथ संगतो दशरथेन स राजा सपदि श्रिया परमया समयोजि ।
अपि नाम किं समभवत् फलपुष्प पुनरन्य एव मधुना हि वनान्तः ॥ ३५
अति दूरतो दृशमथस्मितमग्रे सविधे मुहु. सुनिबिडं परिरम्भम् ।
इतरेतरं सखियुगं तदतानीच्चरमं पुनः कुशल-संकथनानि ॥ ३६
अथ चारणस्तव-विवर्द्धित कीर्ति-स्मित शोभनायत दिशा वददेन ।
उपजग्मतुर्मुदित पौर-पुरन्ध्रीकृत-मङ्गलं पुरममु मिथिलाख्यम् ॥ ३७

अलकावली ललित तोरणमालामविसौध-हेमकलश-स्तनभारम् ।
समपश्यता परिणयोचितशोभं नृपकन्यकामिव नृपो नगरीं ताम् ।। ३८
जनकस्तथा विभवसारसमृद्धया तमुपाचरद् विनयवामनवृत्ति. ।
चरितं यथा तदखिलं सचिवानामुपदेशतामुपययौ सविशेषम् ।। ३६
अथ राघव' सुख-निवेशित-सैन्यो विविधोपचारवति सद्मनि रम्ये।
सहित सुतै विरुरुचे स च तन्त्री विहित प्रयोग इव मूर्त्तिरूपायै ।। ४०
स विधाय काञ्चन कथा सह पुत्रैर्बहुशस्तदीय गुण-गौरव-मत्त ।
क्षणवद्विशेष-परिवृत्त-निशीथ शयनीयसगतिमदिक्षदमीषाम् ।। ४१
पितुराज्ञया निजनिजं शयनीयं मृदु सत्वरं श्रितवतामपि तेषाम् ।
निजभृत्य-पाणिपुट-मृष्टपदाना-मितरेतरं प्रववृते निभृतोक्ति ।। ४२
भृशमुल्लसत् परिणयोचितशोभा हृदि कुर्वतो जनकराजतनूजाम् ।
न समीपमागतवती रघुसूनोश्चिरमीर्षया कलुषिता किमु'निद्रा ।। ४३
अथ यामिनी-विरति-मगल-शंखोमिथुन मिथो विघटयन्त समग्रम् ।
चरणायुध-क्वणित-मासलनादै परिपूरयन्निव दिवं समपादि ।। ४४
सकलापि मन्मथ निदेशवशाना निमिषावशेषमगमद्रजनी सा ।
स कियान् क्षणस्तु रणितारुणचूड सहसासहस्रयुगतामिव भेजे ।। ४५
अथ वारुणी परिचयारुणधामा कृत-गो-बिपत्तिरनुभूत-कलंक. ।
अनुतापवानिव सुमेरु - नितम्बादपराम्बुधौ निरपतद्द्विजराज ।। ४६
हरता वसूनी समयेन दस्युना अचलाध्वनि नरम्बरी कृत ।
उपदिग्वधूद्विजपति स्त्रपावशादधिपश्चिमोदधिजल ममज्ज किम् ।। ४७
अथकाल मतङ्गजेन याबद्रजनी कल्पलतावला वभञ्ज ।
शशिमण्डल तारकाच्छलेनान्वपतत् कि फलपुष्पमाशु तावत् ।। ४८
गगनाङ्गतले इतस्ततो विकीर्णानुडु - तण्डुलान गिलति कालकपोत ।
हृदयमङ्गमध्वनि विश्रृङ्खल शंख प्रकर प्रकाशित विकूजितकण्ठ ।। ४६
स सृष्टाना पत्युरिन्दो कराग्रैरङ्गादङ्गादस्रवन्मोषधीनाम् ।
मुक्ताजालै स्पर्द्धमानास्तुषार स्तोम व्याजा विन्दवः स्वेद वारान् ।। ५०

स्तोकोत्स्वसत् - कमल - कुड्मल - गर्भभाजा
मद्राघयन्मधुलिहा मृदु गर्जितानि ।
कल्लोललास्य - गुरुरम्बुज - लोचनाना
क्रीड़ापरिश्रम-विनोद-सख. समीर. ॥ ५१
दरविवृत मुखात् सरोज-जालात् समद मधुप गुप्त गर्भान्मुहु. ।
उषसि धनमिवेष्टितं सौरभ निभृत गतिरचौरयन्मारुत ॥ ५२
मणितैरिव शिञ्जितैरलीना रजनीमेव सहेन्दुना रमित्वा ।
स्वपति स्म कुमुद्वती प्रभाते वहदार्द्रानिल-मीलितोत्पलाक्षी ॥ ५३
न रेणु पतनै नं चाटुवादै नं सहचरी वचसापि मन्दितो य. ।
विरणति चरणायुधे वधूभि. प्रसभमधूनितमान् स एव मान ॥ ५४
कि मानग्रहपीडया पदनत प्रेयान्मयोपेक्षितो-
व्यावृत्यैव कुचोपमं समसकृत् कि नाम नालिङ्गित ।
कामं नाम सखी जनो हसतु मा धावेयमेव प्रिय
तारं कूजित-कुड्मले वरतनूरित्यन्तरालोचयत् ॥ ५५
अपि रजनिमशेषा मन्मथं शास्त्र-तत्वं
कुवलयनयनाभि शिक्षितं वल्लभेभ्य ।
उषसि पुनरुदेष्यद् विप्रयोग-व्यथाभि-
स्तदखिलमुपयोषतु तत्त्वरे तत्र सद्य ॥ ५६
निद्राच्छेद-कषाय-लोचन पुटं निर्मृष्टरागाधरं
लक्ष्मीलक्ष्यकुसङ्गरागरचनं प्रस्वेद-लीनाशुकम् ।
अङ्गैराद्र-नखक्षतै स्मरकलानुध्यान रोमाञ्चितै-
रन्योन्यं करपद्म मुद्रितकरा वाराङ्गना निर्ययु ॥ ५७
अथ करुण-विकूजत्-काकशोकापहारी
नलिन-विपिन-हाम-प्रार्थना-चाटुकार. ।
ग्रहपति रुदयासद्वासवाशा कृशाङ्गी
करधृतकरविन्दादर्शवद्दर्शनीया ॥ ५८

निस्तीर्य्याम्बुधिमापदं समुदयन् विश्वैर्विशेषस्तुत
श्रीमानम्बुजबान्धव क्षितिभृतामाक्रम्य तुङ्ग शिर ।
पादेन प्रहृता द्विषा कुमुदिनी–नाथेन पाथोजिनीं
सीदन्तीं हिमवाष्पसंप्लुतमुखी-माश्वासयत् स्वै करै· ॥ ५९

कौसुम्भं-सिचय नितम्ब-फलके वक्षोरुहे कुङ्कुमं
पाणौ निर्मलपद्मरागवलयं गण्डे च माध्वीमद ।
कण्ठे विद्रुम मालिका किशलयोत्तंसं श्रुतौ योषिता-
मेकोऽयं विविध विभूषणमभूदङ्गेषु वालातप ॥ ६०

सिंहीलग्नं नखाग्रे रुधिरमिति मुहु स्वादित न व्यरंसीत्
गुच्छप्रान्ते प्रसक्तं व्यकिरदनुदिश वानरी वह्निबुद्ध्या ।
अग्रस्थ बञ्जुलाना स्तवक इति चिरं पुष्पलावी व्यमृष्यत्-
काश्मीरेणेव विश्वं स्थगयदभिनवं भानुमद्भानुवृन्दम् ॥६१

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
दशरथागमनो नाम सप्तम· सर्ग ॥

# अथाऽष्टमः सर्गः

अथ क्षणे गोतम नन्दनादिभि-र्निवेदिते गाधिसुतस्य शासनात् ।
नियोजयामास कुटुम्बिनीजनं निमीश्वर पारिणयेषु कर्म्मसु ॥ १
अनन्तरं स्वीकृतगीतमङ्गला यथा कुलाचारमुदीरितक्रमा ।
कृताधिवासा मुनिना पुरोधसा नृपात्मजामस्नपयन् कुलस्त्रिय· ॥ २
स्वभावत काञ्चन-केतकी प्रभा वधूर्यदस्नाप्यत कुङ्कुमाम्बुभि· ।
न सौरभाय द्युतिसंपदेऽथवा परं तु मगल्यतया तदाकृतम् ॥ ३
इतस्ततस्तोयपृष्पद्भिरङ्किता तदङ्गयष्टि सुतरा व्यराजत ।
लतेव हैमा नवमुक्तिकामयै प्रसूनपुञ्जै परितः-करम्बिता ॥ ४
तत परं वारिकणापनूत्तये पिनह्य धौतांशुक पल्लव – द्वयम् ।
रराज वैदेहनरेन्द्रनन्दिनी स हंसमालेव सुवर्ण-पद्मिनी ॥ ५
प्रसाधिकाना निचयावृतै करैरियं समुन्मार्जित वारिशीकरा ।
नवं जवासंनिभमंशुकं दधौ वलद्द्विषो वालमिवातप हरित् ॥ ६
विमुक्तमस्या कवरीभरं तदा दुधाव धूपा-गुरु-धूम-मञ्जरी ।
अलब्धपूर्वामशिता जनैरपि ग्रहीतुकामेव तदीय नीलताम् ॥ ७
प्रसाधिका - तत् - कवरी प्रसाधने तदङ्गुलीं गन्धफलीति गृह्णती ।
स्मितेन तस्या प्रतिबुध्य तत्क्षणं चमत्कृता तत्र सखी विहासयत् ॥ ८
निशीथसूर्चामुखभेदनव्यथामचिन्तयित्वा यदुपाश्रितो गुणः ।
तदेव मूर्द्ध्रा कुसुमानि सादधौ न केशपाशाधिक-सौरभार्थिनी ॥ ९
तदीक्षणे खञ्जनगर्वगञ्जने मनोज्ञया कज्ज्वलरेखयाञ्चिते ।
उपासिते मत्त-मिलिन्द-मालया घृणामिवेन्दीवरदाम्नि तत्वतु. ॥ १०
अलंकृतं तच्चरणानुरञ्जने नियोजयन्ती निपुणापि काचन ।
अरूपभेदेन तदंघ्रि-पद्मयो पदे पदे तद्विममर्ष सादरम् ॥ ११

प्रवेशमग्नौ प्रहृती महीयसी विघर्षणं बा कठिने कषोपले।
अलब्ध मुग्धे कनकं त्वदाप्तये तदेन मात्माङ्गरुचा विभूषय ॥ १२
असाहि पूर्वं गुरुवज्र भेदनं ततो मुहु साण - विघर्षण - व्यथा।
तत परं क्षाररजोभि· रूषता नितान्तमम्लोदक-भावनानि च ॥ १३
अमीभिरब्धेर्महिमा विवर्द्धनै रिति त्वदर्थेन किमर्जितं तप ।
अमूनि रत्नानि तदात्मनस्तनौ निवेश्य वामोरु चिरं कृतार्थय ॥ १४
इति प्रसन्नाक्षरया सखी चिरानुबध्यमाना जनकेन्द्रनन्दिनी ।
स्मितेन साकूत - दृगन्त - बन्धुना विभूषणानुग्रह-मन्वमन्यते । १५

कुलकम्

घनान्धकारावृतमम्बरं यदा सरेख-तारावलिमण्डितं भवेत् ।
मृगीदृशो मौक्तिकमालभारिणं श्रयेत सीमन्त-पथस्य तुल्यताम् ॥ १६
प्रसाधयन्त्या हरिताल लेखया तदीय भाले विहितो विशेषक ।
अराजदापुङ्ख-निमग्न एव कि मनोभुवश्चम्पक-निर्मित. शर ॥ १७
रराज नासाग्रगतं नतभ्रूवो विभूपण निस्तल मौक्तिकोज्ज्वलम् ।
प्रभालवं प्रापयितु मुखेन्दवो निशाकरेण प्रहितं नु तारकम् ॥ १८
प्रयुक्त मुक्तोपरिवेश-पेशलं बभौ च ताटंक-युगं मृगीदृश. ।
त्रिलोकराज्ञो रतिपञ्चबाणयो किमातपत्रद्वितय पृथक् स्थितम् ॥ १६
मृगीदृश. कण्ठमनुप्रकल्पिता विचित्ररत्नावलि-निर्मिता स्रज· ।
करम्बयमाणा विविधैर्विहङ्गमै-र्वभुस्तरङ्गा इव सौर सैन्धवा. ॥ २०
सा पद्मरागाङ्गद-मानतभ्रूवो-भुजद्वयं कामपि कान्ति-मादधे ।
स्वया प्रियालिङ्गनरागसंपदा शरीरवत्येव नितान्तमावृतम् ॥ २१
करारविन्दे कटकं मृगीदृशो महेन्द्रनीलोपल-कल्पितं बभौ ।
तदीय-सौरभ्य विशेष लिप्सया मधुव्रतानामिव संगतं कुलम् ॥ २२
व्यराजदस्याः स्तनयोर्युगं तदा विभावितं चन्दनपङ्क-चर्च्चया ।
त्रिलोकजैत्रस्य मनोजभूपते शरीरभाजा यशसे विसेवितम् ॥ २३
सयत्नमासञ्जितरत्न मेखलं सरोरुहाक्ष्या जघनस्थलं तदा ।
महेन्द्रचाप-प्रतिविम्बचुम्बिनीं जहास जाम्बुनद-सैकत-श्रियम् ॥ २४

हरिन्मणी कल्पितमेणचक्षुषः पदारविन्दे विरराज नूपुरम् ।
कथंचिदावर्जितमुर्मिरंहसा सरोरुहे शैवलमण्डलं यथा ॥ २५
स्वयं हि लक्ष्मी जनकेन्द्रनन्दिनी विभूषिता यौवनसंपदा ततः ।
ततो विवाहोचित-वेश-पेशला कथं नु वाग्देवतयापि वर्ण्यते ॥ २६
प्रसाधिका दर्शित - दर्पणोदरे तनूर्यदस्याः प्रतिविम्बिताऽभवत् ।
विमृष्य भूम्नी कविभि स्तदालिभि स्तदेव तस्या उपमानमाहृतम् ॥ २७
सदुर्वया कौतुक-सूत्र-लेखया ववन्ध तस्या करपल्लवं गुरुः ।
अपूर्वया रामगुणश्रिया पुन प्रसूनधन्वा स्थिरवृत्ति तन्मन. ॥ २८
इति प्रयुक्तप्रतिकर्म्मभूषणा प्रणम्य वन्द्यान् प्रतिगृह्य चाशिष. ।
स्थितावभासे जनकेन्द्र–नन्दिनी विवाहलक्ष्मीरिव देहशालिनी ॥ २९
समाप्य रामोऽपि दिनागमोचितं विधिर्विधिज्ञस्य पितु–र्निदेशतः ।
पुरो वयस्यै रुपनीतमाहृतै विवाहनेपथ्यविशेषमाददे ॥ ३०
सुमुद्गृहीतोज्ज्वलहीरकं सकं रघुद्वहस्य रुचदंघ्रि पङ्कजम् ।
सुतस्य सुग्रीवकपे कृते स्वयं दिवाकरेणेव गृहीतमर्थिना ॥ ३१
वभौ तडिद्दामनिभेन वाससा नवाम्बुवाहच्छविरस्य विग्रह॰ ।
परिस्फुरत् काञ्चन वल्लिमालया-परागतो मारकतो यथा द्रुम. ॥ ३२
स मध्यमासिञ्जित–मञ्जुमेखला-गुणस्थ-माणिक्य-मणिप्रभाभरै॰ ।
जहार बालातपरश्मिमञ्जरी-करम्बिता बालतमालचारुताम् ॥ ३३
विलेप काश्मीर रुचारुणीकृता रराज तद्वक्षसि मौक्तिकावलिः ।
पुराणमूर्त्तेरिव तस्य विग्रहे हिरण्मयी सा जगदण्डसन्तति ॥ ३४
पय पयोधे र्यदि फेनलेखया भ्रियेत मन्थाचलनीलशृङ्गकम् ।
विशुद्ध मुक्ताफल-कल्पिताङ्गदं तदोपमीयेत भुजद्वयं प्रभो ॥ ३५
विचित्र-रत्नोज्ज्वलकङ्कण. कर-स्तदा वरस्योपमितं गमिष्यति ।
प्रसीद्यति वासमुरीकरोति चेन्नवग्रही कोकनदासने क्वचित् ॥ ३६
तदाननं कुण्डलरत्नदीधिति च्छटाभिराक्रान्त-कपोल-मण्डलम् ।
विचित्र निर्माण विधे र्मनोभुव॰ कृतिर्विचित्रेन्दुमयीव निर्बभौ ॥ ३७

ररा ज गोरोचनया विनिर्मिते विशेषके तस्य ललाट-पट्टक ।
सुराङ्गनावन्दन-दीपवर्त्तिका-नुविम्बचुम्बीव नवीन-चन्द्रमा ॥ ३८
इतस्ततः शुक्तिवितीर्णमौक्तिका कलिन्दकन्या यदि जायते क्वचित् ।
अनल्प-कल्पद्रुम पुष्पगर्भकं तदा तुलामेष्यति तस्य कैशिकम् ॥ ३९
तत॰ प्रयुक्ताभरणं रघुद्वहो ददर्श खड्गे सुहृदोपकल्पिते ।
निजं वपु सृष्टवत प्रजापते र्मनोरथानामिव भाग्यमुत्थितम् ॥ ४०
प्रसाधिते दाशरथे शरीरके न वर्णनीये प्रसरन्ति मद्गिर. ।
ध्रुवं तदुत्कर्ष विशेष-वेदिनी रुणद्धिलज्जेव जडा सरस्वती ॥ ४१
अथोपगत्य प्रणिपातपादयो स यावदाप्नोति पितुर्जयाशिप. ।
अवाप तावत् सह गौतमस्तदा घनस्वन स्तूर्यशतं कुशध्वज ॥ ४२
स भूपमूचे सहित सुहृज्जनै रुपेक्षते ते तनयं मदग्रज ।
तदेनमादाय विदेह - भूभुजातप॰ फलेन व्यतिषज्यतामिति ॥ ४३
तत॰ परं कौशिकसंमतक्रिय प्रिय पृथूक. प्रचाल मन्दिरात् ।
कुशध्वजासक्तमधूकमालिना सहानुजेनैव सुवाहुवैरिणा ॥ ४४
नटत्पतकावलिचारु तोरणं प्रमोद - संगीतकसक्त - नागरम् ।
तदा न तेषा नयनोत्सवं तदा निमीश्वराणा मिथिलेतिपत्तनम् ॥ ४५
अनेन नीलोत्पल-कोमलत्विषा कथं नु कष्टं धनुरैन्दुशेखरम् ।
अहोमहाभाग्यभृता मृगीदृशा धुरि स्थिता संप्रति भर्तृदारिका ॥ ४६
अयं वपुष्मानिव पुष्पसायको रतिश्च साक्षादियमेव मैथिली ।
अहो नु दिष्ट्या भगवान् पितामहश्चिरेण सयोजनकर्मठोऽभवत् ॥ ४७
अयं युवा नेत्रचकोरचन्द्रमा इयं च साक्षात् क्षितिलोकचन्द्रिका ।
तदेनयो. संघटनं वितन्वता चिरेण धात्रा महदर्जितं यश. ॥ ४८
इति प्रजाना मधुराक्षरा गिरो मुहुर्मुहु. श्रोत्रपथे निवेशयन् ।
प्रसादमुग्धस्मित-विस्फुरन्मुखो विवेश राम श्वशुरस्य मन्दिरम् ॥ ४९
इय यथैका दयिता पिनाकिनस्तथा त्वमेका भव राघवप्रभो॰ ।
इति प्रयुक्ता गुरुणा गिरीन्द्रजा ननाम कन्याऽपि करम्बितत्रपम् ॥ ५०

कुलाङ्गना-कल्पित-मङ्गलक्रियो वरस्त्रपा-मन्थर-चारुतारकः ।
अनन्तरं कौतुक-वेदिकान्तरं ययौ वहि शालविचुम्बिताम्बरम् ॥ ५१
अथोपवेश्य क्षितिपं सबान्धवं विदेहराजो मणिमञ्चराजिषु ।
सभासदा ब्रह्मविदामनुज्ञया स पूजयामास वरं यथाविधि ॥ ५२
सहंसचिह्ने दधदशुके नवे पिनद्ध-रत्नाभरणः स्रगञ्चित· ।
कृतोपदेशो बिधिवत् पुरोधसा हुताशमाधत्त विवाहसाक्षिणम् ॥ ५३
अथोपनिन्ये कुलपालिकाजनैर्नितम्बगुर्वी निमिराज-नन्दिनी ।
दुकूलवल्ली-विहितावगुण्ठना वरान्तिकं बारिजपत्रलोचना ॥ ५४
मनोरथेन त्रपया च निर्मितैरुदंचदाकुञ्चदपाङ्गरिङ्गणै ।
अखेलदिन्दीवरदोलयास्मर स्तदावगुण्ठान्तर एव सुभ्रुवः ॥ ५५
ततो वराय प्रतिपादिता करे विदेहराजेन कुशोदकेन सा ।
प्रमोद-विन्दून् पुलकाश्च तन्वता मनस्तदीयं तु मनोजभूभुजा ॥ ५६
वरस्य पाणि पुलकानुवाह यत् मुहुस्तदकूरितमङ्ग जन्मना ।
वधूकर स्वेदजलं यदक्षरन् मनोभव· पल्लवति स्म तेन किम् ॥ ५७
वधूमुखं प्रैक्षत साचिलोचन श्छलेन पश्यन्निव संसदं वरः ।
वरानुविम्बेन विभूषितं पुनर्वधूरवालोकत रत्नकङ्कणम् ॥ ५८
तदैकभावं हृदये तयोर्द्वयो निनाय पूर्वं सुरते गुरु स्मर· ।
तदर्थमाम्नाय गिरः प्रयोजयन् ययौ पुरोधा पुनरुक्तिदूषणम् ॥ ५९
करेण सा कोकनदानुकारिणा विमुञ्चति (ते) लाजगुणान् विभावसौ ।
नबे रवेर्द्धामनि तारकोत्करान् प्रभात-सन्ध्यैव नितान्तमावभौ । ६०
परस्परावद्धदुकूलपल्लवौ किरीटिनौ कौतुकसूत्रधारिणौ ।
प्रदक्षिणीचक्रतु राशुशुक्षणि वधूवरौ मङ्गलदेवतोपमौ ॥ ६१
गुरूपदेशेन कुरङ्गनेत्रया कृते विवाहानलसमुखे मुखे ।
कपोलयो क्लान्तयवावतंसयोर्वभार धूमो मृगनाभिपत्रताम् ॥ ६२
पदाम्बुजे सप्तपदी विवित्सया समुत्क्षिपन्ती जनकेन्द्रनन्दिनी ।
तिरश्चकार प्रतिविम्बकैतवात्ततस्तत· कोकनदैरिव स्थलीम् ॥ ६३

वरेण सा बालकुरङ्गलोचना प्रयुज्यमाना ध्रुवदर्शनं प्रति ।
यदुन्निनाय स्मितमुग्धमाननं ध्रुवं तदिन्दोरधिकार-दित्सया ॥ ६४
ततो विनिर्वृत्त विवाहकौतुका-दिमौ गुरुणा चरणेषु नेमतु ।
उपाहरन्तौ मुकुटाश्मरश्मिभि र्नवा नवा चन्दनमालिकामिव ॥ ६५
सराजमङ्के स्मितपङ्कजाननौ निवेश्य सिंहासनसन्निभे नृप ।
तयोर्वितन्वन्निव राज्यसंपदं प्रमोद - वाष्पैरभिषेकमातनोत् ॥ ६६
प्रदाय सीता रघुराज सूनवे विदेह राजो मुमुदे तथा मुहु. ।
यथा परासा विसृता करग्रहं परं तदीयैरनुजै ररोचयत् ॥ ६७
अथोपयेमे कुशकेतुनन्दना रघुद्वहस्य प्रथमेतर सुत. ।
परैः पुनस्तद्वितय-द्वितीययो' क्रमादधत्ता करपीड़नोत्सवम् ॥ ६८
अति वत्सलया धिया स राजा कुलभूषासहिता' स्नुषा अपश्यत् ।
गृहिणा सविशेष मार्द्र मन्त सुतदारेषु हि सत्कुलोद्भवेषु ॥ ६९
इति तत्र महेश्वरो रघुणा प्रणयावर्जित-चित्तवृत्ति रुच्चैः ।
अनयत् कतिचित् निशास्तदानीं जनकेन्द्रेण सपर्यया गृहीतः ॥ ७०
उषसि दलित निद्रो वन्दिना काव्यवन्धै-
रघुपति-रतिनम्रै-रात्मजै-र्विद्यमान. ।
दुहितु-विरह-खेद-व्याकुलं मैथिलेन्द्रं
कथमपि शमयित्वा गन्तुमैषीदयोध्याम् ॥ ७१

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
जानकीपरिणयो नामाष्टम सर्ग. ॥

# अथ नवमः सर्गः

अथ संचचाल बलभित् प्रतिमः पृतनाभरेण नमयन्निव गाम् ।
सुहृदो विदेहनृपते सुकृतं परिभावयन् मुहुरमात्यसख. ॥ १
प्रतिवर्त्म सम्यगवलोकयतामुपवीणितं मधुरयैव गिरा ।
अमृताभिमानि निजपुत्रयशो मुहुरापिवन् किमपि मत्त इव ॥ २
अथ तस्य वर्त्मनि पुरस्तदा ध्वजनिर्भरेण चरमं पतता ।
स्थिरयद्भिराकुलमनीक-जनं चकितैरभूयत चमूपतिभि ॥ ३
सहसा दिधक्षुरिव विश्वमिदं पतितोनुभानुरवनौ गमनात् ।
जनलोचनैरसहनीयतम क इवायमेति महसा निचय. ॥ ४
इति संभ्रमातिशय-शीर्णपदं चरमं जनेन जड़-माजगदे ।
प्रथम पुनश्च ( त्तरगर ) निभै पटु दुर्निमित्त - निबहैरसकृत् ॥ ५

युग्मकम्

अथ साहसैक-रसिकैरपरै. क्रमशो विभावितनराकृतिक· ।
नृपलक्ष-कक्ष-निचयक्षयकृज्ज्वलदग्नि रैक्षि जमदग्नि-सुतः ॥ ६
जननीगलस्खलदसृड्मसृणा नटयन् करे निजकुठारलताम् ।
प्रतिविम्बडम्बरमिषेण भया-दनुकुर्वतेव जगतोपगताम् ॥ ७
परमस्य तस्य पुरुपस्य भुजा-दुपजातमस्य जगत. शरणम् ।
कुलमीर्ष्ययेव हतवत्यसकृन्निजदोष्णि लोचनयुगं विकिरन् ॥ ८

कुलकम्

पुरतो निरीक्ष्य मुनिमध्वधरं लिखितेव सा न चलति स्म चमू. ।
भयविक्लवं नयनमाकिरती हरिणावली हरिणराजमिव ॥ ९
तदतीवकातरमवेक्ष्य वलं भृगुनन्दन स्मितलव व्यतनोत् ।
नहि सर्वसागरपिवस्य मुनेरनुपल्वलोदकमुदेति रति· ॥ १०

तमवीक्ष्य भार्गवमुदीर्णरुषं वपुरात्मनश्च जरसा शिथिलम् ।
निजबालकेषु दृशमुल्ललयन् क्षणमाप कामपि दशा नृपति ॥ ११

अथ यावदेष पुरवैरि-धनुर्दमन क्व राम इति गामवदत् ।
ददर्शमात्मजसख पदयो-र्निपपात तावदवनीतिलक ॥ १२

अपहाय भूमिपतिमंघ्रिनतं दृगमुष्य राम मुखमेव ययौ ।
कटु कोपवेगकलुषा हि धियो विनतेषु सन्ति न पुनर्विनता ॥ १३

विकटं करेण नटयन् परशुं नयनेन मुर्मुर इवावकिरन् ।
पुरत स्थितं स्तिमितसिन्धुनिभं रघुराजनन्दनमुवाच मुनि ॥ १४

पितृवैरिपार्थिववन वहुश परिदह्य हेतिभरशेषमसौ ।
दरशान्त एव मम रोषशिखी समदीपि विक्रमतृणेन तव ॥ १५

मिथिलापते सदसि पाशुपतं धनुरक्षिणोत् स्वमतिवीर्य्यमदः ।
ननु रे कथं नु हरशिष्यममु नृपजातिकालमपिमाऽजगण ॥ १६

गुरु धेनु लोलुपतया प्रथमं यदवापि हेहयनृप कदनम् ।
गुरुधन्वलोपमवलेपवशात् कलयन कथं तदसि लब्धुमना. ॥ १७

कृपणैर्वचोभिरयमद्य पितु क्षमयिष्यसे न जमदग्निसुतम् ।
ननु रे स्वमातरि तथा कठिन कुत एष यास्यति कृपामरिषु ॥ १८

यदि कौशिकादधिगतं किमपि श्रितमेव जन्म यदि वा रघुषु ।
तदिह क्षणं समुचितेऽवसरे भुजसम्पदा भज मुनीन्द्रममुम् ॥ १९

विलपय्य यत् किमपि गर्वयसे धनुरैश्वर तदपि जीर्णतरम् ।
तदिहास्त्रवेदपथि पङ्गुधियोबहुमन्यते न जनकादपरः ॥ २०

सकलं नु वस्तु जरसामुषितं परिभूयते जगति हीनवलै ।
व्यथयन्ति शृङ्गशिखरेण मृगा गजवैरिण गलितदन्तनखम् ॥ २१

अथ विस्तरैरलमलं वचसा यदि सत्यमेव तव वीर्य्यमदः ।
तदिदं धनुर्मुरभिदोबलवद् विततेन योजय गुणेन परम् ॥ २२

अपरीक्ष्य वाहुयुगलस्य वलं कथमल्पके त्वयि रण मृगये ।
वचनीय एव कृतिभिर्महतामहाजनेन न विरोधरस ॥ २३

शितकोटिना परशुना यदि चेदथ कातरी भवति ते हृदयम् ।
इयमेत्य मैथिलसुता नचिरादुपभिक्षणं तव शरीरमदम् ॥ २४
इति वाचमुद्गिरति गर्वमयीं भृगुनन्दन पुरुषरोषवशात् ।
स्फुरिताधरं प्रतिविविक्षुतया विनिवार्य्य लक्ष्मणमपाङ्गदृशा ॥ २५
अवहेलयैव भृगुसूनुकराद्रघुनन्दनो धनुरिदं जगृहे ।
कृतमेव शंसति यश कृतीना नतु कण्ठशोषणविधायि वच ॥ २६
युग्मकम्

विनयान्मुहु स्थगितहासलवं करलीलया कमलकान्तमुख ।
नमयाम्बभूव मुरवैरि-धनु भृशमुच्छ्रितं च भृगुसूनुमदम् ॥ २७
अथ सदधन्निजममोघमिषुं किमनेन भेद्यमितिलोक . ।
त्रपया नमन्मुखमवेक्ष्य मुनि तमुवाच दाशरथिरार्द्रमना ॥ २८
प्रहरत्यपि त्वयि रुष न मुनेर्मम चित्तमेति किमुताक्षिपति ।
अनपेक्ष्य दोषगुणमर्च्यत मा मनुजातिरेव भवता महती ॥ २९
अथ किं करोमि वद नाम मुने मम संहितो नहि शरो विफल ।
विनिहन्मि वा गतिमनेन तव पदमर्जितं तव मखैरथवा ॥ ३०
अथ राघवं स निजगाद मुनिर्निहितश्च तत्त्वमसि मे विदित ।
क्व भवानशेष निगमान्तगति. क्व विडम्बन मनुजडिम्भ इति ॥ ३१
अपराध एव मम सत्यमसौ तदपि प्रभो ! गुण इवाभिमत ।
अपथो भवानुपनिषद्वचसा कटु गर्जता विदित एव यत. ॥ ३२
पितृवैरिण क्षितिपति न सकृद्विनिहत्य तत्कलुष निष्कृतये ।
सहसागरा वसुमती वितरन्नपि नाहमस्मि शममाप्त इव ॥ ३३
तदयं पराजयमपि प्रभुता गमितस्त्वया हृदि तनोमि धृतिम् ।
उरगक्षतस्य विनिहन्ति रुजं प्रसभं महौषधिलताभिहति ॥ ३४
तदयि ! क्षमस्व कुरु मे करुणा मव तीर्थसंततिषु मे गमनम् ।
जहि नाकवर्त्म सुकृतक्षयकृन्मनवाञ्छित शमसुखान्यधुना ॥ ३५
इति तस्य वाचमनुभूय नवा नृपनन्दन स्मित मनोज्ञमुख. ।
विदधे तथेति मतमेव मुने न रघो:कुलं विषममर्थिजने ॥ ३६

अथ राघवं प्रणतमंघ्रियुगे वहुश. प्रसादनपर स मुनि· ।
परिरभ्य तात विजयस्व शिवं भवतात् दिशन्निति तिरोधिमगात्॥ ३७
गत एव तत्र मुमुदे जनता रभसेन राममुपयातवती ।
कुमुदावली सुदिवसापगमे हिमरोचिषः किरणः विच्छुरणम्॥ ३८
उरसा सहर्षमुपपीडयत· पुनरेव जातमिव तद्विदुष· ।
नृपते· पुरा गलित-वाष्पपथं शिशिरीचकार पुनरश्रुरुर· ॥ ३९
अथ जामदग्न्यकथयाश्वसित व्यतिमोदमानपृतनानिवहः ।
अपनीय वर्त्मनि निशा कतिचित् पुरमाससाद सविधे नृपति· ॥४०
मणिसद्मना विसृमरै किरणै पवनोद्धुतैर्ध्वजपटैश्च मुहुः ।
हृतचित्त चक्षुषमवेक्ष तदा जनकात्मजामिति जगाद सखी ॥ ४१
श्वशुरस्य ते सुदति ! पश्य पुरं स्मितशालिनी मधुसुधैर्भवनै· ।
चपलध्वजा शुकलतावलनैर्भवतीमिवाह्वयति सा प्रणयात्॥ ४२
स्फटिकोपलैर्विरचितावरणे प्रतिविम्बितं तत इत· स्ववपु· ।
अवलोक्य यत्र चकिता भवतीं प्रहसिष्यति प्रियतमो न चिरात्॥४३
अपरागभाज मरुणाश्मगृहे तव गण्डपालिमवलोक्य पति ।
अभिशंक्यमान कलुषा भवतीमयि यत्र ते चरणयो पतिता ॥ ४४
कुरुविन्दमन्दिर-मयूखमयं दिवि भास्करव्यतिकरं कलयत् ।
तव केलिकोकमिथुनं रजनौ क्षणमाश्वसिष्यनि न यत्र कथम्॥ ४५
अयि यत्र तुङ्गवल्लभी शिखरे भवती विहार समये नियतम् ।
दयितं भवन्मुखधिया वहुश शशिविम्बचुम्बनमुपाहसिता ॥ ४६
( ननु पद्मरागमणिवेश्मरुचा परिपिञ्जरज्य निवहं सवधूम् ।
सखि यत्र निश्चय विवादविधौ वहुहारयिष्यसि पराक्रमताम् )॥४७
हरिदश्मवेश्मरुचपीततनु स्तनुगात्रियेत तव केलिशुकः ।
कलकूजितेन कुतुकोत्तरल हृदय करिष्यति चिरं युवयो· ॥ ४८
हृतमिन्द्रनील-भवनप्रभया यदि तत्र केलिपिकमीक्ष्यसि भो ।
करवाणि मौनमवलम्ब्यवसेन्निजकूजितै· सह भवन् प्रकटः ॥ ४९

कमलाक्षि यत्र तव वक्त्ररुचास्रवदिन्दुकान्तसदन परित ।
दयितस्य ते भवनमर्घदिने जलयन्त्रमन्दिरमयत्नकृतम् ।। ५०
तव रूपमेतदनिमेषदृश पुरयोपिते नियतमप्सरस ।
मृदुवाणि यत्र नयनैरसकृत् परिपूजयन्त कमल-प्रतिमै. ।। ५१
मिलितं शिताशित - दुकूलयुगं नृप-मन्दिर ध्वजगतं वियति ।
दिशि त प्रयाग-जलवेणीकृत तवकौतुकं सुमुखि यत्र मुहु. ।। ५२
सखि यत्र कान्तिविजिताप्सरसा नटयोषिता ललितनृत्यविधौ ।
वलभिश्रुता-त्रिदिव तूर्य्यरवास्तव पूरयन्त सुरलोकसुखम् ।। ५३
तव चेतसा विमलमम्बुजितं परिभाव्य यत्र गृहदीर्घिकया ।
सरुषेव रत्नतटविम्बमिपात् ( कलनाजिताकीवतेसदृश ) ।। ५४
नलिनानि यत्र (नलिनीरुपा) दविचिन्वती सरसिजं भवती ।
उपदेक्ष्यते किमपि शीकरतो दशताधरं मधुलिहातिमधु ।। ५५
जलकेलि कौतुकवती नियत न मुहु स्वयं सुमुखि यत्र भवे ।
रजनी वियोगविधुरेष ततो मिथुने कृपातरलता दधति ।। ५६
अवलोक्य यत्र तव रूपमिदं कमलाक्षि केलिविपिने नियतम् ।
वनदेवतास्तरुलताश्च समं परिपूजयन्तु कुसुमस्तवकै. । ५७
सखि यत्र केलिवनभूमिरुहा चरमं धुनोतु कुसुमानि मरुत् ।
प्रथमं पुन· सुदति कोऽपि तव स्मितचन्द्रिका परिभवानुभव. ।। ५८
वणिकाङ्गना - स्मित - मयूखभरैर्घनसारगौरतरमेणपदम् ।
गमयन्त यत्र निजमेव गुणं तव दासिका शितिकटाक्षरुच ।। ५९
पणिता वणिग्युवतिनेत्ररुचा घनसारमेणमदमेव वदन् ।
तव दासिका हसति विच्छुरित तमवेक्ष्य यत्र किमपि त्रपताम् ।।६०
सेयं पुरी रघुवरै रतिलोकपालै
गुप्ता मुदं तव तनोतु दृशोरयोध्या ।
तन्मत्सरा सुरनदीमुपहास्य फेनै-
र्यामाश्रयत्यनुदिन सरयू· सखीव ।। ६१

अङ्क प्रवेशसमये तवसारसाक्षि
त्वद्वीक्ष्यता प्रणयिना प्रमदाजनानाम्।
हस्ता श्रयन्ति नवपल्लवतोरणत्व-
मेते च हेमकलशत्वमुरोजभाराः॥ ६२

इति जनक सुतामुदीर्य्य तस्य वदनसरोजमवाप मौनबन्ध ।
नृपतिरपि सुतः स्नुषा समेतो निजनगरं सह सैनिकैरशेषै॥ ६३

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
ऽयोध्याप्रवेशो नाम नवम. सर्ग. ॥

# अथ दशमः सर्गः

अथ तत्र रहस्यवस्थितं नृपतिं प्रापदरुन्धतीपतिः।
प्रशमप्रियमाश्रमं ततो वशिनं तत्त्वविनिश्चयो यथा॥ १
तमवेक्ष्य महोभिरात्मन-स्तमसा भानुमिवक्षयक्षमम्।
सुरशैल इवाभवन्नृप· शिरसा पाद-परिग्रहोत्सुकः॥ २
परिपूज्य यथावदादरा न्मुहुराशीर्वचसा-भिनन्दित।
वदति स्म निषण्णमात्मनः मुनिमेनं मनुवंश वर्द्धन·॥ ३
जयति त्रिदिवेश-दुर्ल्लभं गुरुभाग्यं रघुवंश-जन्मनाम्।
भगवानपर प्रजापते-रिव येषा मनुशासनोत्सुक·॥ ४
भगवन् भवत· कृपास्पदं कुलमेतत् कलयन्निवात्मभु·।
परिवर्द्धयते दिने दिने निजपुत्रस्य तव प्रियंकरः॥ ५
त्रिदशैरपि नाक्षमत् स्वयं निजसिद्धौ विनियुज्यतेतमाम्।
इदमप्यधिकं न चिन्वते रघुवंशस्य भवन्निषेविण·॥ ६
दयसे मयि यद्विशेषतो रघुसाधारण - वत्सलोऽपि सन्।
उचितं जगदुत्सवः शशी तदसौ कैरवबन्धुरुच्यते॥ ७
भगवन् कृपयैव ते परं निहितोऽहं धुरिभागधेयिनाम्।
बिधुरक्षतमण्डलोऽपि सन् स्फुरति व्योम्नि न यामिनीं विना॥ ८
पद मुन्नतिमत्सु विद्विषा-चिरमारोपितमेव मूर्द्धसु।
विषयैरपि देवदुर्लभैः परितोषान्मुहुरर्थिना कृताः॥ ९
अनुभूत-ममर्त्य दुर्ल्लभं वलशात्रोर्विनियोग-गौरवम्।
सकल - क्रतुकर्म्मशीलनाच्छतमर्थे विनियोजितं वहु॥ १०
नतदस्ति सतामनिन्दितं सुखमस्मज्जगतामपि त्रये।
तव पादरज· कृपावशा-दनुभूतं न मया यदन्वहम्॥ ११

अधुना जगत कृतार्थता त्रिदिवस्थे विषयेऽपि निःस्पृह ।
जरसा प्रतिपादितं शनैः शमवर्त्म श्रयितुं समुत्सहे ॥ १२
अहितादपवार्य्य देहिनं पथि शान्ते विनियोक्तुमिच्छति ।
जरसं जननीमिवापरा द्विपतोऽजीवनिरस्तु दुर्मते ॥ १३
तदहं स्वकुलोचितामिमा धुरमुर्वीं भुवनस्य दुर्वहाम् ।
विनिवेश्य सुबाहुवैरिणो भुजदण्डे भुजगेन्द्र - संनिभे ॥ १४
भवदीय - तपोवनान्तिके रघुवंशोचितमाचरन् व्रतम् ।
मृगये मुनिराज । केवलं शम - पीयूपरसाभिषेचनम् ॥ १५

इति तस्य निशम्य भारतीं शमसौरभ्य-सुवासिता मुनि ।
नि–जगाद रदांशु - कैतवान्मुहुरन्तर्मुदमुद्वहन्निव ॥ १६
रघुनायक । साधु भापसे ध्रुवमेतद्विपया विपोपमा ।
भरतो विनिपातयन्ति वा विमुखान् वा रवयन्ति सेविता ॥ १७
जरसामुषिनस्य दुर्मते रतिकष्टाद्विषयेषु गृध्नुता ।
अपरस्य तवेव जायते शमपीयूप–पयोनिधौ रति ॥ १८

सुकृतानि कृतानि यत् पुरा तदभूस्त्व रघुवंश-सम्भव ।
इह पुण्यविशेपसंपदा सुतभूयं किल राममानय ॥ १९
उचितस्तव साम्प्रतं क्रम पथि शान्तेऽभिनिवेशमिच्छत ।
कुलधूर्य्यसुताहिनाभवं स्तव पूर्वे गृहमेध-गृध्नवः ॥ २०
इति तस्य गुरोरनुक्रिया-चरितार्थं स्वमवोधि पार्थिवः ।
अनुमोदितमेव साधुभिर्निजमिष्ट बहुमन्यते वुध ॥ २१

वहुमान पुरःसरं नृप स तमर्थ प्रकृतीरशिश्रवत् ।
न खलु प्रभुतामद सता-मनुरक्तेषु जनेषु कर्हिचित् ॥ २२
प्रकृतीरधुना पृथक् पृथक् स च रामस्य महोदय-श्रवः ।
मलयाचल-मारुताकुर सहकारद्रुम-वल्लरीरिव ॥ २३
अथ सम्यगवेक्ष्य पार्थिव प्रकृतीना प्रियमस्यवैभवम् ।
ववृधे पिकसम्मतं यथा सहकारस्य विजृम्भितं मधु ॥ २४

नृपति निजमंशमादरादधिरोप्य प्रणमन्तमेव तम्।
अमुमर्थमशेष - संमतं विधिवद्ग्राहयितुं प्रचक्रमे ॥ २५
चरितं वहुश· परंतपो ध्रुवमस्मत् कुलसंभवैर्नृपै. ।
यदयं त्रिजगद्विभूपणो हरितुल्य स्तनयस्य ( माष्वथा ) ॥ २६
त्वमपि स्पृहणीय-जन्मना भजसे वत्स जगत्सु निश्चितम्।
इति येन गुणैरनाविलै पितुरप्युत्तरलीकृतं मनः ॥ २७
कुलधूर्य तदेत-मात्मनोभरमुच्चै-स्त्वयि संनिवेशयन्।
अनुगन्तुमहं समुत्सहे पदवीं राघववृद्ध-सेविताम् ॥ २८
तदतिन्द्रितमानसश्चिरं चरवर्णाश्रमपालनव्रतम्।
सविशेष-मशेप कामदं ननु राजर्षिभि रेतदिष्यते ॥ २९
जहि वत्स हृदेकसंश्रयं रिपुषड्वर्ग ममुं दुरासदम्।
अमुना विजितस्य हि ध्रुवं न चतुर्वर्ग-फलं प्रसिध्यति ॥ ३०
अनुरञ्जय तात सर्वथा प्रकृती· सम्मगुपायकर्म्मठ ।
अपि भूधर ! ईश दुखिन स्वनुकुल-प्रकृति र्न पार्थिव ॥ ३१
सकलोऽपिजनोऽयमात्मनि स्थिर-विश्वास मवैतु ते मन ।
अनिमीलित-नीति लोचनो निभृतं जागृहि वत्स संमतम् ॥ ३२
न च केनचिदेवहेतुना विपदे दत्स्व पदं मनागपि।
अपि तारयते महाभयात् पुरुपार्थस्य निधिर्हि सत्पथ ॥ ३३
प्रयतस्व तथैव सर्वथा जनता वक्ति यथा भवद्यश ।
कथयन्त्यपि साधवो हितामुभयं लोकमिह प्रतिष्ठितम् ॥ ३४
हर वत्स शरीरिणा मन कुसुमानामिव सौरभं मरुत्।
कलशोदकचन्द्रविम्बवत् ह्रियमाणोऽपि न धत्स्व हार्यताम् ॥ ३५
स्वजनानिव वत्स दुस्त्यजान् सविरोधानितरेतरं सह।
रम नव्यतमादरं सृजन् पुरुपार्थान् स्वमुखे नियोजयन् ॥ ३६
स्वपदे विनिवेशयन् गुणान् स्वमुपायै सहितान् यथायथम्।
अभिवर्ग विलोपनिव्यथो भवयोगीव नितान्तनिर्वृत. ॥ ३७

नमनागपि लंघयन्नय निजमेकं भुजवीर्य्य-माश्रय।
अनपेक्षित - नीतिवर्त्मनामपसर्पन्ति बुधा इव श्रियः॥ ३८
स्फुरदङ्ग - विशेषपेशला पुरुषार्थ - प्रतिपादिनीमिमाम्।
श्रुतिवन्नभिवेदसंपदं चरितार्थां चरयन् सुखी भव॥ ३६
इति जल्पत एव भूपते-र्वहदानन्दजवाष्प-वेणिभि।
रुदतस्तनयस्य तत्क्षणं वदनं क्षालयितु प्रचक्रमे॥ ४०
सकथंचिदथोपशान्त्वयन् स वशिष्ठस्तनयं नराधिप।
तमविग्रह - मात्मनो मतं पितु विश्लेषनितान्त-कातरम॥ ४१
अथ केकयराज-नन्दिनी सखिमन्त्रेण-विमोहिताशया।
विनमद्वदनेन्दुराययौ जननिर्वाद-महारवैरिव॥ ४२
स च तामवलोक्य पार्थिव प्रियमित्येतदशेषसत्रिवान्।
न विवेद हृता दुराशया निजवैधव्य - फलैक - हेतुना॥ ४३
भजत क्षितिपालतामयं तव पुत्र किमनेन मादृशाम्।
नरनाथ! पुरा प्रतिश्रुतं वरयुग्मं मम दातुमर्हसि॥ ४४
इति वाचमुदीर्य्य भामिनी वरयेति क्षितिपेन भाषिता।
मणिभूषण-मञ्जुलाकृति-र्वरयुग्मं विषवद्जगाद सा॥ ४५
प्रथमेन सुबाहु - वैरिणो वनवासं शरदश्चतुर्दश।
अवृणोदपरेण भामिनी निजवैधव्यफला सुतश्रियम्॥ ४६
मृतलोपसुत-प्रवासयो रसहस्तद्विचनं निशम्य स।
अपवारित चित्त-वृत्तिना प्रलयेन क्षणमन्यगृह्यते॥ ४७
अथ यत्न-शतेन सेविना क्षितिपाल प्रतिपद्य चेतनाम्।
मुहुरस्मरदात्म-कर्म्मजं विषमं वैश्यतपस्वि-शासनम्॥ ४८
स विभाव्य धिया विशुद्धया बहुमेने निजसत्य-पालनम्।
सुत शोकमियेष लाभवत् प्रतिकृत्य तृणकै रिवासुभि॥ ४६
स च मैथिल नन्दिनीप्रियो वनवासे गुरुणा नियोजित।
स्वमतं च कृतार्थमुच्चकै गुरुसत्य - व्रतभङ्ग - भङ्गदम्॥ ५०

स हि राज्यमभोगलोलुप परमुत्कृष्ट - ममंस्त पूर्वत ।
पितुरव्रत - भङ्ग - सिद्धये वनमेष्यन्मुमुदेतरा तत ॥ ५१
स्वयमेव मुमोच सस्मितच्छवि-विस्फारमुख शिखामपि ।
जनता तु विशेष-विक्लवा प्रसहन्तीं जलधोरणीं दृशो. ॥ ५२
मसृणस्मित एव स स्वयं मुकुटं रत्नबहूत्ससर्ज स· ।
सहसैव किमस्य मूर्च्छितोजन वाष्पैरुपचार आहित ॥ ५३
अबुधाः किल केकयीऽयथा दभिषेक - प्रतिषेध - साहसम् ।
निर्विवेद रघूद्वहं जनैरभिषेक निजलोचनाम्बुभि ॥ ५४
पथिकं विपिनस्य राघवं जनकेन्द्रप्रभवा च लक्ष्मण. ।
अनुजग्मतु रात्तविग्रहौ किमु लक्ष्मीव नयौ गुणप्रियौ ॥ ५५
तमरण्यनवप्रवासिन परिवार्य प्रणयेन सर्वत. ।
श्रवदस्फुटमुद्गताक्षरं विललाप व्यथित. पुरीजन. ॥ ५
अयि केकयि किं कृतं त्वया त्रिजगद्भाग्य ममृष्यमाणया ।
किमयं न विधेर्निवारता भवत कौशल – सामवैरिण. ॥ ५७
रघुनाथ तथार्जिताविमौ तनयौ बालदिवाकरोपमौ ।
अवलोप्य कुयोषित. कृते कथमन्धेतमसि प्रवेक्ष्यसि ॥ ५८
विरचय्य वशिष्ठ-सन्निधौ स्थविरश्चत्तशमाय संविदम् ।
रघुनाथ किमन्यतेक्षमं वनितार्थे त्रिजगन्निमज्जनम् ॥ ५६
भजतामतिकल्पपादपा-द्भुजदण्डाद्रघुराज पुत्रयो. ।
अटवी विटपीष्वहो कथं भवितार· फलमूलभिक्षव· ॥ ६०
यदरोचत गात्र मे तयो घन - कर्पूर - पराग - संस्तरे ।
कथमीप्सित - दुर्ल्लभं भवेत्पुलिनं तस्य दृषत्कणाकुलम् ॥ ६१
क वनं रजनीचराकुलं कनु तन्वी जनकेन्द्रनन्दिनी ।
नवनीतमयी न पुत्रिकाज्ज्वलदङ्गार - निवेश मर्हति ॥ ६२
नव–कोकनदानुकारिणौ चरणौ ते मृदु संस्तरोचितौ ।
विपिने घनकण्टकोपले वद वैदेहि कथं भविष्यति ॥ ६३

अनिशं खलु या निषेव्यसे मृदु चाटु प्रवणैः सखीजनैः ।
बत सा परिवारयिष्यसे कथमश्रव्य रवैः शिवागणैः ॥ ६४
क्व घना वनवास–यातना क्व शरीरं च शिरीष-कोमलम् ।
अयि दैव ! कथं त्वमप्यहो मतमत्येषि न केकयीपते. ॥ ६५
च्यवता मनृतादयं नृप सुकृतैरस्मदुपार्जितैश्चिरम् ।
अयि ! राघव ! मानवं गमः करुणा चेत् कृपणेषु ते ध्रुवा ॥ ६६
अनुज शिशुरेव ते ध्रुवं सुकुमारैव विदेहनन्दिनी ।
विपिनाध्वगतन्नमुष्य न परिचर्य्या कुशला (नभृत्रिमान्) ॥ ६७
अथचेद्वनमेव यास्यसि द्रुतमस्मानपि नेतु मर्हसि ।
वनमेव गृहं भविष्यति ध्रुवमुर्वीतिलक त्वदाश्रयात् ॥ ६८
इति विक्लव - विक्लवाक्षरं विलपद्भि परित पुरीजनैः ।
अयमन्धितपद्धतिस्तदा नगरी–संनिधिमत्यवाहयत् ॥ ६९
अथ तामवलोक्य विक्लवा जनता-माशु यथा सविव्यथे ।
न तथा दयिता न चानुजं विषमे वर्त्मनि खेदभाजनम् ॥ ७०

अथ कथमपि तान्निवर्त्त्य रामो-
विषयमवाप निषादभूमिभर्त्तुः ।
ग्रहपतिरपि तत् परिश्रमाणा-
मसह इवाचलमस्तनामधेयम् ॥ ७१

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
श्रीराम वनवासो नाम दशम सर्ग ॥

# अथैकादशः सर्गः

अथ तौ तत्र सौमित्रि–परिचर्याहृतश्रमौ ।
निन्दन्तस्ता नवक्लेशौ चिन्ताद्राघीयसीं निशाम् ॥ १
प्रातर्विहङ्ग - संगीत - कृतप्रत्यूष - मङ्गलौ ।
सीतया सह काकुस्थौ प्रतस्थाते यथासुखम् ॥ २
तेषामुन्मुक्त - माणिक्य - मुकुटानि दिवाकर. ।
शिरासि मण्डयामास मयूखै मसृणारुणै ॥ ३
क्रमात् कठोरता प्राप्तै. किरणै. समतप्तवान् ।
रविः पतिव्रतख्यातं परीक्षितु मना इव ॥ ४
दूयमानाऽपि वैदेही मयूखैरहिम – द्युते ।
अकरोत् करपद्मेन रामस्यातप - वारणम् ॥ ५
लक्ष्मणस्तु तयोर्वर्त्म गूढं तस्तार पल्लवै ।
यदृच्छा - वीक्षितस्तन्वद्रामस्याश्रुलवान्नवान् ॥ ६
इति तेषा पथिक्लेश – नितान्तक्लान्त-चेतसाम् ।
कृपयैव पुर प्राप चित्रकूट - महाचल ॥ ७
रुन्धानै रोदसीरन्ध्रमाक्रान्तवसुधातलैः ।
पादै दिविषदा सेव्यैस्त्रिविक्रम इवापर. ॥ ८
नित्य श्रुति सरित् पूतै प्रेक्षणीयै दिवौकसाम् ।
सानुभिश्चान्तराकारै वदनैरिव पद्मभू ॥ ९
प्रियासख्यै किपुरुषै कुञ्जकुक्षिनिषादिभि. ।
संगीतोमद - संरक्तै विहङ्गैश्च समन्ततः ॥ १०
मदगन्धलवं दर्पादन्येषामसहिष्णुभिः ।
दन्तिभिः प्रथितोच्छ्रायः सुभटैरिव पार्थिव. ॥ ११

अन्तर्ध्यासित ( मृग च ) छाया धवलिताम्बरम् ।
दधदिन्दुमिव स्फीतं कलधौतमयं तटम् ॥ १२
सिताभ्रक्षयोद - धवल· सन्नखार्जित लक्ष्मण ।
तारावलि-मनोहारी स्तनाभोग इव क्षिते ॥ १३
सज्योतिश्चक्र-संचारं वैमानिक - निषेवितम् ।
दधानः शृङ्ग संघातं नभस्तलमिवा-परम् ॥ १४
घनयादश्रिया जुष्ट-ममृतोत्पत्तये क्षमम् ।
अम्भोधिरिव बिभ्राणो वपु क्रान्त रसातलम् ॥ १५
शिलावक्षसि सोत्कम्पमर्पित - स्तवकस्तनम् ।
स्मेराभिर्वनराजीभि· सविभ्रममुपासित ॥ १६
वहन्नधित्यकामङ्के रत्न-चित्रित-मेखलाम् ।
ताडितो वनराजीभि· सासूयमिव पल्लवै ॥ १७
ते च तस्य रामणीयं पश्यन्त. पृथिवीभृत· ।
उपकारमिवागृह्णन् मध्यमाम्वा-विचेष्टितम् ॥ १८
विशाल-बाधा-विवशा महिला-हस्त-कोमला ।
किमुन्नतशिलाखण्डे पादपङ्कज-कोशदा ॥ १६
( पतनो हात पतिते शशि पेशलमाननम् ) ।
एहि शाखीतल शीतं सीते ! किशलयाचितम् ॥ २०
देहि सुन्दरिमा-पाणिपल्लवं गण्डमण्डले ।
चन्द्रछाया अहकार-भारं मुञ्चन्तु तं चिरम् ॥ २१
इति स्वभाव-मधुरं म्लेच्छन्तीभिरितस्तत ।
तत्रभिल्ल पुरन्ध्रीभि वैदेही समभाव्यते ॥ २२

कुलकम्

अथ मध्यदिनादित्य - प्रतापक्लान्त - लोचनाम् ।
काकुस्थ· प्रेयसीं प्रेक्ष्य विश्रामाय मनो दधे ॥ २३
तावधोधस्तरुच्छाय शिलातल-निषादिनौ ।
पल्लव - व्यजनैर्भेजे सौमित्रिरिव मारुतः ॥ २४

शिशिरैः शीकरैर्वारा विकीर्णैं पद्मरेणुभिः ।
उपतस्थे समीरस्ता-नाञ्जनेयकृते किमु ॥ २५
यावन् ममार्ज श्रीराम स्वेदविन्दून् प्रियामुखे ।
तावदभ्यधिकाश्चक्रे स्पर्द्धमान इव स्मर ॥ २६
तरुवल्कलसंवीतं रामस्य नयन-प्रभा ।
आवृणोत् प्रेयसीगात्रं नवनीलोत्पलैरिव ॥ २७
ता रामोऽभिनवक्लेश - विवशीकृत - चेतसाम् ।
विनोदयिष्यन् वैदेहिमिद वचनमब्रवीत् ॥ २८
एतं पचेलिमं तन्वी तिन्दुकप्रसवं कपि· ।
चुम्बत्येव न तच्छिन्दन् प्रियाया वदन-भ्रमात् ॥ २९
एते प्रतारिताः पश्य शस्यान् मरकताकुरैः ।
पुरोवर्त्तिनि शस्यानि लिहन्ति न मृगार्भकाः ॥ ३०
अमु किंशुकमुत्फुल्लं त्यजन्ति सभयं गजा· ।
स्मरन्तस्त्री व्रतापाना पारीन्द्र करज प्रियाम् ॥ ३१
अवधेहि कुरङ्गाक्षि ! तवायं मधुरं शुकः ।
पुरा दशतिकन्दर्पसर्वस्वं विम्बसंभ्रमात् ॥ ३२
अयं तमाल - षण्डेषु त्वत्केश - प्रतिमादिषु ।
आह्वयन् प्रेयसीं नष्टा मधुरं बृंहति द्विप ॥ ३३
एष स्फटिक-पट्टेषु प्रेयसीं प्रतिविम्बिताम् ।
अनुगच्छन्नृप सेर्ष्यं तर्कया किमपीक्ष्यते ॥ ३४
इमे मदकलास्तन्वि ! कपोता· कलकूजिता· ।
नमयन्ति पुलिन्दानामुखमन्तर्गत-स्मितम् ॥ ३५
इत्येवमादिभिस्तस्या श्चाटुकारो रघूद्वह· ।
वाक्यैर्निवर्त्तयामास वनवासकृता शुचम् ॥ ३६
अथ निर्वापयामास सुतशोकानलं नृपः ।
गलता जीवनेनैव पार्थिवात् कायकुम्भत· ॥ ३७

ततस्ततः जना सर्वे विलापात्त - मुखश्रिय ।
हैमनेन्दुकर - क्लिष्टा - सनपद्मकरा इव ॥ ३८
संमन्त्र्य च वशिष्ठेन तन्नियन्त्रित - मन्यव ।
भरतस्यागमे यत्नं तेनिरे ते निरेनस· ॥ ३९
स च तत् प्रहितै र्दूतै रन्तर्नयन-मम्बुभिः ।
ददृशे मातृवन्धूना सदने सदनेनक. ॥ ४०
पितुराज्ञेति संदिश्य तमानेतुं प्रचक्रमे ।
तैरवेदित - वृत्तान्तै र्मानवै र्मान - वैभवी ॥ ४१
साविलापा विलापायाङ्क्ष्पते र्ददृशे पुरी ।
प्रभाविना भाविनाशादन्येव नृपसूनुना ॥ ४२
स उपेत्य प्रकृतिभि र्यथावृत्तं निवेदितः ।
अनार्यामिव तामेने जननीं जननिन्दिताम् ॥ ४३
महद्भिरपि निर्वन्धै-र्लक्ष्मीं ग्राहयितुं न ते ।
पौरा· संपादित - स्वान्त - प्राभवं प्राभवन्नमुम् ॥ ४४
रामैकयोग्या ता लक्ष्मीं जनक - प्रतिपादिताम ।
मनसाऽपि न संस्प्रष्टुं चक्षमे जानकीमिव ॥ ४५
अति – निर्वन्ध्यमानोऽपि स तानेवमभाषत ।
स्वानुग्रहाय श्रीरामं श्रीरामं त्रायतामिति ॥ ४६
अथ प्रकृतिभि सार्द्धं वृद्धामात्यः पुर.सर. ।
प्रतस्थे भरतस्तूर्णं पन्थानं रामसेवितम् ॥ ४७
शुश्रुवे विपुलस्तस्य सेना – पट्टह – निस्वनः ।
मातु. पापविदामात्म – संशुद्धिमिव घोषयन् ॥ ४८
तस्य सेना - गजेन्द्राणा निपेतु· करशीकरा ।
जगत शोकतप्तस्य किमुनिर्वापणोत्सुका. ॥ ४९
यदग्र-चरणैस्तस्य वाजिनोऽभ्यलिखन् मुहु ।
तन्मन्ये मोहसंसुप्ता मुदजागरणा भुव· ॥ ५०

तस्यसेना समुद्धूत धूलि - पटल - कैतवात्।
कि सूक्ष्मं वपुरास्थाय प्रतस्थे पृथिवी स्वय ॥ ५१
व्यनमन् पृतनानका' फणा एव फणीशितु ।
रामनयन - वार्त्ताभि र्मन. पुन रुद्श्वसीत् ॥ ५२
श्रुतानाश्रमवासिभ्यो म्लानपल्लव - संस्तरान्।
ददर्श भरत सास्र रामस्य वसति द्रुमान् ॥ ५३
स श्रीराम - नखाग्रेण सदयक्षुर्ण्ण पल्लवान्।
धन्यानमंस्त काकुस्थ सुकृत काननद्रुमान् ॥ ५४
पुलिनेषु ध्यजाम्भोज–वज्रचिह्नानि राघव ।
ववन्दे रामचन्द्रस्य पादानि शिरसा मुहु. ॥ ५५
अथ प्रपेदे भरत श्चित्रकूट - निवासिनम्।
भ्रातरं प्रातरम्भोज - वदनं सह लक्ष्मणम् ॥ ५६
स प्रणम्याग्रजं दूराद्वतस्थे कृताञ्जलिः।
सोऽपि तं सस्वजे गात्रं सुमित्रासुतवन्दितम् ॥ ५७
रामस्तमङ्कमारोप्य पप्रच्छ कुशलं पितु ।
स वाष्पव्याकुल सर्वं मौनेनैव न्यवेदयत् ॥ ५८
अतीत - पितृनिर्याण रामं प्रकृतयस्तत. ।
मुनिवृद्धान् पुरस्कृत्य यथावृत्तमवोधयन् ॥ ५६
निमित्तभूतमात्मानं शरीर–यजने पितुः ।
नावलम्बितुमुत्सेहे राम' पातकिमानिनम् ॥ ६०
परमार्थविदा तत्र मुनीना वाक्यविस्तरै ।
कथंचित् प्रकृति प्राप रामः क्षाममुखद्युति ॥ ६१
अथ रामस्य चरणौ गृहीत्वा शुभलक्ष्मणौ।
ययाचे भरत' शश्वत् पैतृकी - श्रीपरिग्रहम् ॥ ६२
चित्र मित्यल्पमनसामतिमात्रमपेक्षितम्।
राम काव्यमिवाभिज्ञो न राज्यं ( कष्टसृष्टवान ) ॥ ६३

ततस्ता प्रार्थयामास मुनिवृद्ध - प्रचोदित· ।
भरतः पादुकेकर्त्तु रघुसिहासनोत्सवौ ।। ६४
तथेति तद्‌विसृष्टोऽपि न्यवृत. लक्ष्मणाग्रज· ।
दीर्घ-निश्वास-निर्दिष्टं कथंचित् कोशलापथम् ।। ६५
स पातकमिव स्फीतं मातुरालोकनं विदन् ।
नगरीं रघुवीराणा नाविशत् केकयीसुत ।। ६६
पादुके रामभद्रस्य भरतो वृद्धमन्त्रिवत् ।
विधाय रघुसिहाना सिंहासन - विभूषणे ।। ६७
नन्दिग्रामगत स्तेन यथा निर्दिष्टमाचरन् ।
अशिषत् प्रयतो राज्यं प्रजानां प्रीतिमावहन् ।। ६८
श्रीरामोऽपि समं पत्न्या नवे वयसि निर्व्यथ ।
चचार विपिने पुण्यं रघुवृद्धोचित व्रतम् ।। ६९
जातु दाशरथिस्तत्र तरूणा शीतले तले ।
सुस्वाप दयितोत्संगे निवेशित - शिर क्षणम् ।। ७०
तस्या व्योमचर स्वैरं जयन्त· स्थिरचापलः ।
श्लथवल्कल - संव्यानौ ददर्श विपुल-स्तनौ ।। ७१
रामैकपत्नीं ता पापो मायैव सुलभेतराम् ।
काक.सन् कुचयोस्तस्या निचखान नखावलिम् ।। ७२
तया संभ्रान्तया यावद्बोधते रघु - पुङ्गव ।
अस्त्र सौमित्रिरैशीकं तावदस्मै व्यसर्जयत् । ७३
स तेन परितो धावन् क्वचिद्प्राप्त - रक्षणः ।
मुक्तसानुग्रहेणेव काणीकृत्य जिजीविषु ।। ७४
अथ रामेण भूयोऽपि भरतागम - शङ्किना ।
साकेत - दु ख - दायादं चित्रकूटोऽपि लङ्घितः ।। ७५
तस्मिनिन्दीवरश्यामे निष्क्रान्ते सीतया समम् ।
निवृत्तं नीलकण्ठाना मधुरं मद - ताण्डवम् ।। ७६

जग्मतुर्दक्षिणामाशा जानक्या सह राघवौ ।
सास्त्र मासञ्जित - दृशा हरिणेष्वनुवर्त्तिषु ॥ ७७

आश्रमेषु मुनीन्द्राणामातिथेयेषु राघव ।
वसन्नवर्द्धयत् प्रीति वसन्त इव शाखिषु ॥ ७८

ददृशुस्ते मुनिस्तत्र मात्सकर्णौ स्तपोवनम् ।
अप्सरो भोग-साम्राज्यै र्हरिणा परिणामितम् ॥ ७९

अन्त पश्चाप्सरो वाद्यै. सौधोत्सङ्ग तरङ्गितान् ।
मेनिरे तन्मृदङ्गास्ते लज्जाविजयडिण्डिमान् ॥ ८०

दूरादेवतदातिथ्यं यत्नात् पर्य्यहरन्नमी ।
न स्वदन्त मनस्विभ्य· सता ह्यनुचिता श्रिय ॥ ८१

क्रमेणासुरभङ्गाय शरभङ्गेण वर्जित ।
स्वर भङ्गाकुलं रामः शरभङ्गाश्रमं ययौ ॥ ८२

तं प्राप्य शरभङ्गोऽपि भवन्तं गदकीर्त्तनम् ।
अतिथि-प्रीणनैस्तथ्यै रातिथ्यै साध्व पूजयत् ॥ ८३

क्षपयित्वा च काकुस्थौ चकितं पश्यतोस्तयो ।
त्रेताग्नौ जुहुयामास श्रेयसे स नवे तनुम् ॥ ८४

तत स्तच्छिष्य - निर्दिष्ट - वर्त्मना रघुपुङ्गवौ ।
ययतु· सीतयासार्द्ध सुतीक्ष्णस्य तपोवनम् ॥ ८५

क्वचिद्वल्मीक - निर्मग्नै खगनीडाकुलै क्वचित् ।
कीर्णं सर्वंसहैरेव तापसै पादपैरपि ॥ ८६

तन्मध्योपल ( पुटान्त ) कृत - पश्चालन व्रन ।
मूर्त्तिं ब्राह्ममिव ज्योति स मुनि स्तैरवेक्ष्यते ॥ ८७

तस्य वाचयमस्यैव प्रसाद - स्निग्धया दृशा ।
सुधयेवाभिषिक्तास्ते नास्मरन्नध्वन श्रमम् ॥ ८८

सम्यग्वीनितै कथितं सत्त्वै शिष्यजनैरिव ।
अथ तौ सीतयासार्द्ध प्राप्तावत्रेस्तपोवनम् ॥ ८९

श्वापदाश्वासित मृगं मरुत् - पालित - पादपम् ।
विहङ्गाभ्यस्त-वेदान्तं स्तत्प्रीत्यै तदभूत्तराम् ॥ ९०
यथावत् पूजयामास प्रणतान् प्रतिनन्द्य तान् ।
ब्रह्मा – विष्णु - महेशानामवतार - पिता मुनि· ॥ ९१
प्रातस्ताभ्या ददौ दिव्यमस्त्रग्रामं महामुनि· ।
अनुसूयाऽपि सीतायै प्रसाधन - ममानुषम् ॥ ९२
व्रजतो दण्डकारण्य पन्थानं रघुवीरयो ।
वव्रे रक्षो विराधाख्यं पाप धर्मार्थयोरिव ॥ ९३
जहार क्षुधित सोऽथ राक्षसो राघवप्रियाम् ।
अनिन्द्या निन्दिताचार· सम्पत्तिमिव दुर्जना ॥ ९४
स राघव - कर - क्रूर - वज्रपातेन चूर्णित ।
अपतत् पृथिवीपृष्ठे वैद्युताग्निरिवोत्स्वन ॥ ९५
अथ दिव्य - शरीरेण प्रार्थितौ तेन राघवौ ।
श्रेयसे तस्य कृपया कार्यं भुवि निचख्नतु ॥ ९६
तत स्तौ मुद्रितैस्तत्र स्तूयमानौ महर्षिभि· ।
चेरतु· सीतया सार्द्धमगस्त्यस्य तपोवनम् ॥ ९७
संममौ चलुके यस्य सागराणा चतुष्टयी ।
रामदर्शन - हर्षस्य सोऽपर्य्याप्त इवाभवत् ॥ ९८
आतिथेय-स्तमातिथ्यं सानुजं जानकीपतिम् ।
विधिवत् पूजयामास लोपामुद्रा पतिर्मुनि· ॥ ९९
अथ तस्य शासनमवाप्य मुने-रघुनन्दनौ जनकजा-सहितौ ।
फलसनमत्तरुलता - गहना - मुपसेदतु सपदि पञ्चवटीम् ॥ १००

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
पञ्चवटीनिवासो नाम एकादश· सर्ग ॥

# अथ द्वादशः सर्गः

अथ रघुपतिमङ्गनासनाथं विपिनविहार - विलोल - चित्तवृत्तिम् ।
परिचरितुमिह द्रुतं प्रपेदे किशलय - पुष्पपिकस्वनै र्मधुश्री ॥ १

अनुवनमवलासहायमेनं रतिसखमङ्गजमेव शङ्कमान ।
चिरपरिचय-सान्द्रसौहृद किं समुपससाद वनी मधुप्रसूनै ॥ २

अविरल-शिशिर-प्रचारकल्पं च्युतजडता-कमनीय यामिनीकम् ।
अभिमतपवनं प्रसन्नचन्द्र-द्युति-रजनीमुखमाविरास विश्वम् ॥ ३

अभिनवकुसुमोद्गत - प्रवाला मधुकर-कोकिल-कूजिताभिरामा ।
मुदमतनुत राघवस्य दूरान्मृदु मलयानिल - वेल्लिता - मधुश्री ॥ ४

ललितमनुभवन्त स प्रियावान्मुकुलित - चूत - लताङ्कुरे द्विरेफः ।
घनसमयवियोगविप्रकीर्णां कथमपि न स्मरति स्म मालती ताम् ॥ ५

विकसति मम सर्वतः प्रसूने त्वरितमधो निपतनेन सर्ववल्य ।
इति मधुपरुतेन बंजुल - श्री रभणदधोमुखवल्लवाङ्गुलीका ॥ ६

युगपदभिनवोदयासु भृङ्ग कुसुमलतास्वखिलासु बद्धतृष्ण ।
स्वमसकृदनुभूत – सारमेषामपि – नितरामकृतार्थमेव मेने ॥ ७

नभसि रचित-पद्मषण्ढचित्रे करट - कुटुम्बिनि शाल्मलिप्रसूने ।
स्वकुलमनुनिवर्त्तितुं ललज्जे न मधु न सौरभमप्यवाप्य भृङ्गाः ॥ ८

प्रतिदिनमहनि प्रतीयमाने द्वितयमवाप नवं नवं प्रमोदम् ।
हिमकरकिरणोपलब्धखेदं कमलवन मिथुनं चकोरकाणाम् ॥ ९

शिशिर-परिभवक्षण. कथंचित् प्रतिवनमुल्लसिताः सरोजवल्लीः ।
सरसि सरसि वीक्ष्य किं कृपावानलसपदं प्रचचाल पद्मबन्धुः ॥ १०

बहु कुसुमित वृन्त - सिद्धरागं समनुरसन् भ्रमर पलाशवल्या ।
अपरमधुकरी सनाथदर्शा प्रियतमया घनरोषया न भेजे ॥ ११

स्थगितमुखमपि प्रसूनगन्धै-रनुसरति स्म न चम्पक द्विरेफ ।
कथमपि सुखिनो हि नूनमल्पे न खलु गुणातिशयं समाद्रियन्ते ॥ १२
विचकितमुकुलेषु गन्धलोभ. परिपतितो विरराज भृङ्गसंघ ।
तिमिरहर इवाभयार्थमिन्दोरुडुपु तदीय - परिग्रहत्वबुद्ध्या ॥ १३
हिमकरपरिभाविन समृद्धि प्रतिदिवस दिवसस्य वीक्ष्यमाणा ।
मुकुलितकमलानना कृशाङ्गी रजनिरखिद्यत कि तदेकपत्नी ॥ १४
मधु-परिचय-सान्द्र-शोणनेत्रा श्रुतिशुभगं किमपि स्वनं क्वणन्ती ।
पुलक - मुकुल - दन्तुरं रसालं पिकतरुणी नखराङ्कुरैर्लिलेख ॥ १५
विरचित निजदोहदोपकारं वरतरुणी - श्वसितं विशङ्कमान ।
मधुकुसुम-समर्पणै सरागं मलय समीर-मरुन्ध सिन्धुवारः ॥ १६
नवनवमुपचीयमानमब्जं सरसि निरीक्ष्य मरालखण्ड्यमानम् ।
( मधुकृदवलवानशक्यरोध सदयतयानतिदूरगोन्यराजीत् ) ॥ १७
निज विटपभुजेन पीडयन्तं पिकतरुणी नखरक्षतं रसालम् ।
ध्रुतमधुलवलोतका सकोपं च्युतकुसुमैर्न न माधवी जघान ॥ १८
वकुलतरुरभूदिवोन्मदिष्णु-र्मुखमदिरा परिपीय सुन्दरीणाम् ।
द्विजकुलमपि यत् परीतशाखं कुसुममुखो हृतसाधुभि सिषेच ॥ १९
अलि-परिगत-गौर-केशरौघं कुसुममरोचत नागकेशराणाम् ।
रजतमुपगतं प्रसूनकेतो मृगमद - कुङ्कुम - भाजनं मनोज्ञम् ॥ २०
यदि मयि निरपेक्ष एव शम्भु क इव गुणो मधुपेन गृह्यता मे ।
इति किमु घनतीक्ष्णकण्टकाग्रैरवृणुत काञ्चनकेतकी प्रसूनम् ॥ २१
अनुदिनमुपचीयमानधाम्ना खरकिरणेन जगत् प्रतप्यमानम् ।
अनुरजनि सुखीचकार चन्द्रो निजकिरणैर्घनसारणेषु गौरै. ॥ २२
मलय - मरुत - मन्दगन्धमेत्य प्रणयति संगमहोत्सवं रसार्द्रैः ।
क्वणदलिवलयं प्रवालहस्तं व्यधनुत माधविका विकासिपुष्पा ॥ २३
इति बलवति मन्मथैकवन्धा मधुनृपतौ परित प्रवर्त्तमाने ।
किमपि च सततं विचिन्तनीयं स रघुवरोऽपि यदुन्मना इवासीत् ॥ २४

स विपिनविनिवास दु खमार्द्रं वलवदपास्य विलासिनीसनाथः।
ऋतुसुखमुपभोक्तुमाद्रुत. द्राङ्मनसिज - नर्त्तित - चारुचित्तवृत्ति ॥ २५
स्वयमवनमित - द्रुमाग्रशाखो नवकुसुमावचये नियुज्य राम।
दरपरिलुलदंशुकं प्रियाया मृदु भुजमूलमपश्यदार्द्रराम॰ ॥ २६
स्वयमयमवतंसयन् प्रिया ता सुरभि - समृद्धि - विभूषणै॰ प्रसूनै।
अनुवन - तरुवल्लि - गुप्तकायं सरसमदृश्यत नाकसुन्दरीभि ॥ २७
कुसुम-रजसि निर्गतेऽपि राम. सरसिजकान्ति कृशोः प्रियाया ॥
मुखमरुतमुदारसौरभस्यं विरमयति स्म न गण्डचुम्बनोत्क ॥ २८
पवन-चलित-पुष्पतालवृन्त॰ कुसुमित - वल्लिविनान-कृप्त-दोल।
सह जनकजया रघुप्रवीर कुसुमरज पटु वासयन् स भेजे ॥ २९
मुकुलित सहकारगन्धबन्धु - श्चपलित - काञ्चन - केतकी-पराग।
मृदुतरलित - गोतमी - तरङ्गस्तमवसरे मलयानिल सिषेवे ॥ ३०
उरसि रघुपते-र्निरीक्ष्य माला सुरुचिर-किंशुककुड्मलानुविद्धाम्।
अपरनखपदं विशङ्कमाना कुटिलकटाक्षमपश्यदायताक्षी ॥ ३१
निविडमनुगृहाण तन्वि दोर्भ्यां कुरुबक एष विकाशमेतु सद्य।
इति रघुपतिना प्रिया नियुक्ता कुरुबक एव विभोरपीत्यवादीत् ॥ ३२
प्रणयरुपि विदेहराजपुत्र्या-श्चटुवचनानि रघुद्वहे विवक्षौ।
नवविकसित-चूतमञ्जरीषु श्रुतिसुभगं पिक - पञ्चमै प्रचेरे ॥ ३३
कमलदलपुटेन केशराणा सुरभिरसोत्तरमासवं गृहीत्वा।
दरविकसितकुड्मलस्मिताया-रघुपतिरर्पयति स्म वल्लभायाः ॥ ३४
अवनतमुखपङ्कजा च यत्नात् दरपरिरभ्य भुजाञ्चलेन राम॰।
मधु मधुरमदात्तदायताक्ष्यीं मिलित - कपोलतलः परस्परेण ॥ ३५
अथ रघुपति-रादरेण तस्या नवनवमुद्गत साधु विक्रियाया.।
वपुरनुपम - विभ्रमाभिरामं कमपि दृशो परमोत्सवं चकार ॥ ३६
अवशविहसितं विघूर्णि-ताक्षं स्खलदसमञ्जसजल्पितं च तस्या।
मुखमरुण-कपोलमिष्टगन्धं महदभवद्विपिनेऽस्य भागधेयम् ॥ ३७

स रुपितहमितानि निर्मिमित्तं सचकित-विभ्रमसंभ्रमानि तस्याः ।
अतिमुद-मदयन् प्रियस्य दूरान्मदमदनोदय-चेष्टितानि तानि ॥ ३८
समणिमय - दरीषु भूधराणां धरणिरुहां शिखरेषु शीतलेषु ।
कुसुम - परिगतासु केलिकुञ्जे क्षितिसुतया सह तत्र तत्र रेमे ॥ ३९
इति सुरभि समृद्धि-सेवितायां वनभुवि तत्र विहाय दंपतिस्तौ ।
ददृशतुरधिकौतुकेन गोदां कमलवनी - सुखसुप्त - कोकयुग्माम् ॥ ४०
घन - कुसुमरज प्रकीर्ण्णगण्ड - श्रवजलवेणिविशीर्ण्णपत्रलेखम् ।
बनविहरण - लब्धखेदमङ्गं रघुतिलक सदयं ददर्श तस्याः ॥ ४१
अथ जनकसुतामुवाच राम कमलवनी विनिषक्तलोल - दृष्टिम् ।
किशलयललिते करे गृहीत्वा सरितममूमुपदर्शयन्नदूरात् ॥ ४२
सुखयति करभोरु कच्चिदेषा मृदु मलयानिल - लोलपद्मवल्ली ।
जलविहरणकौतुकार्द्र भिल्ली - घन - जघनाहति वर्द्धमानवीचिः ॥ ४३
परिहृत - सरसीरुहैरपास्त - द्विपमदराजिभिराचितै र्द्विरेफैः ।
कथयति तट एष निम्नगायाः स्फुटमिव गन्ध-मृगोपभोगलक्ष्मम् ॥ ४४
किमपि मधुर-गीत-मोहितानामयमियमस्मदुपागमेऽप्यभीता ।
बदति नयनपङ्क्तिरेणकानामचिर - तिरोहित-किन्नरो निकुञ्जम् ॥ ४५
पुलिन-तलसुखेऽपि तेऽयमस्मत्सविधतया सभयं प्रयाति दूरम् ।
सुतनु तव विलासचेष्टितेभ्यः प्रसभ-पराभव-शंकिनीव हंसी ॥ ४६
वरतनु जलदुर्गवासिपद्म ध्रुवमिहवारि - विहार - कौतुकिन्याः ।
तव मुखशशिनः समीरहस्तैरुपहरति प्रसभं च सौरभस्यम् ॥ ४७
ध्रुवमुपकृतमद्य पद्मबन्धोः कुवलयराजिषु दुःसहै कराग्रै ।
शशिमुखि तव दृष्टिचेष्टितानां यदभवदाशु नवकृपानुबन्धः ॥ ४८
जघनमिदमपास्त मेखलं ते ध्रुवमवलोक्य कुलानि सारसानाम् ।
वलवदहित - विप्रयोग - भाग्यात् पुलिनतलेषु मदोत्कटं क्वणन्ति ॥ ४९
रजनिकरमसूत पूर्वमब्धिस्तदहमपि प्रसुवै चिराय ताराः ।
इति किमु निज वीचिशीकरौघान् किरति मुहुर्महिषी महार्णवस्य ॥ ५०

तव सुमुखि दृशोरियं पुरस्ताद्दिवि शफरीपरिवर्त्तते प्रकामम् ।
तदखिलमपि ते बहुक्षमेता रघुषु न षुक एव नोपवन्ध ॥ ५१

घन-जघन - तटाहृतेन तस्या. स ललभरेण विसर्पता विदूरम् ।
रयपरिगलदंशुक प्रियाया स्तनकलशो मदयावभूव रामम् ॥ ५२

तव जघनतलोपमानयोग्ये पुलिनतले सममेव राजहसै ।
वत वसति वक पटूनि कूजन्नहह जलाशयसेविना विपाक ॥ ५३

अयमयमरविन्दपत्रनेत्रे दयिततमामनुवर्त्तते रथाङ्ग ।
चलदपिहित - पक्षति. सकूलं नवविसपल्लवमानने प्रयच्छन् ॥ ५४

इति वचनमुदीर्य रामचन्द्र सरितमवातरदङ्गना - सनाथ ।
सुरमिथुनमिनि प्रणामपूर्वं शवरकुलैरतिदूर - मुक्तवर्त्मा ॥ ५५

चलशफरि - विवर्त्तनै-स्त्रसन्तीं जनकसुतामवलम्ब्य वाहुमूले ।
पुलकमुकुल - दन्तुरै. प्रतीकै. पयसि चिरेण विवेश राघवेन्द्र ॥ ५६

कमलमुकुलसम्भ्रमेण - मुक्तो निपतति एष मधुव्रत सुनेत्रे ।
इति तदपहृतिच्छलेन रामश्छुरित महाकुचकुड्मले प्रियाया ॥ ५७

कर-मुकुलित वारि प्र.प्तरोपा तमसिंचदञ्जलि - सभृतै र्जलैः सा ।
स च मृदुभुजमूल - दत्तदृष्टिस्तदुपकृतेन समर्थयावभूव ॥ ५८

विगलित - तिलकं व्यपास्तभूषा-कुसुममनञ्जनलोचनारविन्दम् ।
सहज - मधुरमङ्गल मृगाक्ष्या प्रियतमलोचनयोरभूदतृप्त्यै ॥ ५९

अथ जलमपहाय दंपती तौ तनुतर - नूतन - वल्कलापिनद्धौ ।
निजमुटजमुपेयतु. सखेलं धृतधनुषाभरणानुजेन गुप्तम् ॥ ६०

इति वनभुवि दर्शितानुरागं विविधविहार - वशम्बदौ जनौ तौ ।
दशमुखभगिनीं निरीक्ष्य भूम्ना निजमत-यौवन गर्वमर्थशून्यम् ॥ ६१

अथ वपुरतिनाकसुन्दरीकं रजनिचरी विरचय्य सा प्रयत्नात् ।
रघुतिलकमभीष्टया समेतं मम पतिरेधि सखे त्वमित्यवोचत् ॥ ६२

प्रहसनचतुर प्रभुर्वभाषे युवतिसखो जन एष पश्य भद्रे ।
अनुजमनुभजस्व मे मनोजद्युतिमद - भङ्गदमङ्गनावियुक्तम् ॥ ६३

इति गिरमधिगत्य तस्य तथ्या त्वरितमियं भरतानुजं प्रपेदे।
स च मुहुरपदिश्य हेतुजातं पुनरपि ता प्रजिघाय राघवाय॥ ६४
असकृदसकृदग्रज निरस्ता पुनरनुजं पुनरग्रजं प्रयान्ती।
समकलयदियं प्रियोपकण्ठे जनकसुता स्मितसिक्तसृक्करेखाम्॥ ६५
रघुवरयुगलेन भग्नकामा प्रतिहसिता च तया रुषा ज्वलन्ती।
अथ रजनिचरी स्वदन्तदष्टस्फुरदधरं जनकात्मजा बभाषे॥ ६६
ध्रुवमिह नरपत्नि लिप्स्यसे त्व फलमवहासविधेरमुष्य सद्य।
मदवशमतिभूय-पुत्रि पुत्रीं न हि शुभमृच्छति वर्त्तिका कथंचित्॥ ६७
इति विकृतगिरं विभाव्य पापा रघुतिलकेन कटाक्षितोऽनुजन्मा।
अरचयदवलून - नासिकोष्ठामसिलतया रिपुजाल - कालरात्र्या॥ ६८

नासौष्ठव्यपकर्त्तनक्षरदसृक्पूरं पिबन्ती निजं
　　रूपं सूर्पणखेति नामसदृशं सन्दर्शयन्ती दिवि।
भूयस्तर्जन-गर्जनै-रघुपतेरुत्भेद्य हासाङ्कुरान्
　　ता लक्ष्मीमुपहर्त्तुमैहत जनस्थाने मुखेनैव सा॥ ६९

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
सूर्पणखानिग्रहो नाम द्वादश सर्ग॥

# अथ त्रयोदशः सर्गः

ता दूरात्तपनसमाननं वहन्तीं वर्षन्तीं विविधमजस्रमस्रपूरम्।
दृष्ट्वैवं क्षुभितमचिन्त्यहेतुकत्वा-दास्थानं चकितमभूत् खरस्य सद्य॰ ॥ १

आश्वास्य प्रियवचनैरथ स्वसारं
पौलस्त्य सदसि निदर्शयन् स्वसारम्।
प्रपच्छ प्रसभ - पराभवस्य हेतुं
शस्त्रौघं निजकृतमङ्कमेऽस्य हेतुम् ॥ २

सा तस्मै कथमपि तन्निवेद्य सर्व नासौष्ठव्यपगम-विक्लवै र्वचोभि ।
बन्धूना रुषमसकृद्विवर्द्धयन्ती सावेगं रजनिचरी रुरोद भूय. ॥ ३

संदष्टस्फुरदधर स्वमाशु कोशान्निस्त्रिश प्रखरतरं खरश्चकर्ष।
व्यालुपन्निव दिवि पूषण स्वकक्षै कोदण्डेऽप्यदधत दूषण. पृषत्कम् ॥ ४

आतङ्कानुपनमयन् विमानभाजा
प्रागूर्ध्वं परितमुदक्षिपत् त्रिमूर्द्धा॰ ।
व्यातेनुर्बहुनरमाससस्पृहाणा
दंष्ट्राणा कटकटितं तदा निशाटा॰ ॥ ५

इत्येषा समर-समागमोत्सुकाना
मुत्सर्पन् दिशिदिशि निर्भरो निनाद ।
प्रत्युद्यन् प्रसभविबुद्धसुप्तसिहो
दीर्घत्वं शिखरि-दरीषु संततान ॥ ६

पन्थान दलितनमाविदिश्यमानं
पौलस्त्य सहचरदूषण स्त्रिमूर्द्धः।
आदाय प्रविचलति स्म राक्षसाना
वीराणा युतमयुतं चतु सहस्या ॥ ७

रामाय प्रधनकथा तथा शशंसु
दीप्तायां दिशि विरुतानि जम्बुकानाम् ।
वैदेहीं द्रुतमनुजे यथा निधाय
द्वेपिभ्यः कलितशरासनः स तस्थे ॥ ८

सा सेना रजनिचरान्तिकं प्रतस्थे
तामग्रे विकृतमुखीं खरं च कृत्वा ।
नुन्नेव श्रुति - कटु - निस्वनेन पश्चात्
गृध्राणा दिविचक्रमुत्करेण ॥ ६

रामोऽपि प्रलय-प्रयोद-घोर-घोषा
नापायान् रजनिचरान् विलोक्य दूरात् ।
युद्धाय प्रहृषित - रोमपूर्णदोष्णा
प्राग्भागे द्दशमतनोत् प्रसादमालाम् ॥ १०

तं दर्पादगणित-विक्रमं समन्तात्
नागाना स्थितमिव यूथनाथमेकम् ।
आधन्वा इव रजनीचरस्य दूरात्
दृष्ट्वैव प्रसभमपावृणन् तदानीम् ॥ ११

नासीरं स्वयमुपगत्य दूषणा-स्त्र्याहारैरुपशमयन् किमद्भिरेव ।
आवव्रे रघुतिलकं निजैरनीकै पर्जन्यो विधुमिव वारिवाहवृन्दै ॥ १२

सा सेना रघुपतिमेव विष्वग्भूयस्त निशित – शरोत्करैर्ववर्ष ।
अन्तस्थं तुरगमुखानलं प्रदीप्तं पाथोभि र्जलधिरिव प्रवृद्धवेगै ॥ १३

तान् वाणान् रजनिचरैर्विकीर्य्यमाणान्
काकुत्स्थ· प्रतिकृति-लाघवादपास्यन् ।
रुन्धद्भिर्दिनकरमन्धयन् गजान् तान्
स वव्रे दिवमवनीं च शस्त्रवर्षैः ॥ १४

श्रीरामः समरभुवि क्षिपन् पृषत्कान्नेकोपि प्रतिरजनीचरं चचार ।
सव्यूहानिव निजनिग्रहस्य तन्वनाश्चर्य्यं गगनसदा यथा पुपोष ॥ १५

सञ्छिन्नं रघुपति-सायकैरमोघैराहृत्य-स्रवदसृज भुजं भटानाम्।
उत्पक्वं निजवदनोद्गतै स्फुलिङ्गै गोमायुः समुपजहार वलभायाः ॥ १६

काकुस्थ - प्रहित - शरप्रलून - मूर्द्धा
योधानाम-धिसमरं निवर्त्तकायः।
दिष्ट्या स्मो वयमनृणाः प्रभोरितीव
व्याकुर्वन् कमपि निरङ्कुशं प्रमोदम् ॥ १७

संत्रामान्मुकुलितलोचनाः पलाद्या
सलीना शवनिचयेषु स्तब्धघाता।
आसन्नान् स्रवदसृजः स्वबन्धुदेहा
नन्योन्यं लिलिहुरुदग्रतर्षतप्ता ॥ १८

तत् सैन्यं रघुवर वाणवर्षभिन्नं विध्वस्तध्वजपट-पल्लवं समन्तात्।
सुष्वाप क्षितिविनिसक्त कायकाडंरुहाणा वनमिव वातविप्रकीर्णम् ॥१९

सानन्द सुरतरुणी स्वयंगृहीता
सत्रासं क्षुधितशिवाविलुप्यमानान्।
अद्राक्षुः कुतुकवशाद्विमानसंस्था
योद्धारो धरणि - विलोचनः स्वदेहान् ॥ २०

(आलोलत् मुखकमला . ...... शैवालमदकलकंकसारः।
पर्यस्य प्रसरदप्सु देहमस्याः प्रबाक्षु पतङ्ग समुद्भवास्तटिन्य ) ॥ २१

रक्ताम्भः सरिति पलादमूर्द्धपद्मं
सस्वादे फलकसरोजिनी - दलस्थः।
दक्षाप्यः प्रियतमया सम सरागं
व्यातन्व-न्निव कलहस कौतुकानि ॥ २२

इत्यस्मिन् निशिचर-संक्षयेऽपि वृत्तो
सेनानीनिज - भुजवीर्य्यमभ्यमित्रः।
त्रीन् वाणान् दशरथ नन्दनस्य लाभे
न्यासन्तीनिव तिलकानथत्रिमूर्द्ध ॥ २३

रामोऽपि प्रहसित एवमाहवेऽलमुक्तेन प्रलय - पयोधर स्वनेन ।
बाणेन त्रिदशरिपोर्जहार कायात्तेनैव त्रिभुवन-मङ्गलाय मूर्द्ध्न ॥ २४

तद्वीक्ष्य प्रकुपित-दूषणस्तमारान्नाराच प्रचयमजस्रमुत्सृजन्तम् ।
श्रीराम. कथमपि दूषण प्रसेहे वर्द्धिष्णुं जलदमकालिक यथाद्रि ॥ २५

कल्पान्तद्य मणि-मयूख-तीव्रमस्मै
तत्याज द्रुतमथसायकं च राम ।
तद्भिन्नो गुरुगलगर्जितानि तन्वन्
मेदिन्या विलुठदयं च कायकूटम् ॥ २६

तं वाणैस्त्वरितमवाकिरत्समन्तात्
पौलस्त्य. स्वजन - विनश्यतीव कोप' ।
तं सोऽपि क्षणमवहेलयैव विद्वन्
व्यातेने हतरथ – वाजिसूत - चापम् ॥ २७

कौवेरीं तदनुगदा प्रगृह्य शत्रु
काकुस्थ पुनरपतत् प्रहर्त्तु-काम ।
सोऽपि स्वैरिषुभिरनादरप्रयुक्तै
स्ता शत्रोः सह विजयाशया निरस्यत् ॥ २८

भूयोऽसौ विपिनतरु करे विधुन्वस्तं यावत् पतति पपात तावदेव ।
निर्भिन्नो रघुपति सायकेन दूराद्दम्भोलिक्षत इव पादपो गरीयान् ॥ २९

एव तान् रजनिचरान् निहत्य सर्वान्
काकुस्थो निजमुटजं मुदा प्रतस्थे ।
बन्धूना प्रलय – विवृद्धतीव्रमन्यु-
र्लङ्काया दशवदनं च राक्षसी सा ॥ ३०

क्रोशन्तः खरमसकृत् विमुक्त-कण्ठं
वर्षन्ती रुधिर-कराल मास्यनस्यै ।
तस्याग्रे रजनिचरी निपत्य भूमा
वाजघ्ने विकटमुर स्थल कराभ्याम् ॥ ३१

आध्मातो नव परिभावमन्युना वै
देवाना परिचरणं भिया निमीलन्।
लंकेशः सदसि निरीक्ष्यतादृशीं ता
व्यातेने किमपि दशान्तरं मुहूर्त्तम्॥ ३२
पौलस्त्य सचिवगणैस्तदिङ्गितज्ञै र्व्याजेन द्रुतमपसारिते समाजे।
प्रापय्य प्रकृतिमिमा प्रियैर्वचोभि. प्रपच्छ स्वजनसखः प्रवृत्तितत्त्वम्॥३३
सा सर्व रघुपति-चेष्टितं यथावद्रक्ष-श्री-प्रलयपथ निवेद्य तस्मै।
तं भूय. समुचितचित्तकोपमूचे वाक्यानि स्थिरलयलेशलाञ्छितानि॥३४
त्वं राजा सकल-सुरेषु तीव्र वैरा
न्नूनं न. श्रियमवितुं क्षमस्त्वमेव।
यस्येत्थं तव किल शासतः त्रिलोकीं
चारोऽभूत् खरवधबोधने जनोऽयम्॥ ३५
रामोऽसौ नर इति नि:सखेति राजन्
सावेगं जितसुरनाथ मास्म धावीः।
तं विद्या निकृतिपरै सुरै कथं चि
द्रक्षोघ्नं किमपि मनो कूले निगूढम्॥ ३६
तीव्रस्ते यदि रजनीचरेन्द्रमन्युस्तत्पारं न निकृति मन्तरेण-मन्ये।
(तपीना रिपुमवलस्य) हन्तुंमिच्छोरेका सा भवति हि जैत्रमस्त्रजातम्॥३७
उद्दामं कुसुम - शरस्य-भागधेयं वर्द्धिष्णुस्त्रिभुवन-यौवतावमानम्।
शिल्पाना कमलभुवो नवा प्रतिष्ठा सीताख्यं जयति कलत्ररत्नमस्य॥ ३८
तद्रूपं गिरितनया रणं गृहीत्वा क्रीत्वेवावशयदनेन चन्द्रमौलिम्।
अस्मै स प्रचुर कलान्वितं प्रदाय प्रख्याता ध्रुवमधुना जगत्यपर्णा॥ ३९
तद्रूपाप्यतिशयिन्. पराभवानामाशंकाकुलितमना किमत्र लक्ष्मी.।
विष्णोरप्युरसि न निवृता जगत्यामस्थैर्य्य वहतितरामनुक्षणं सा॥ ४०
विप्रोक्तैर्बहुभिरशेषविश्वसारा त्वद्यैवं कथमपि ता विलोकयेऽहं।
प्राप्तोऽस्मि ध्रुवमतुलं फलं तदानीं विशत्यास्त्रिभुवननाथलोचनानाम्॥ ४१

तन्वंग्या कथमपि राघवाश्रयाऽसौ विश्लेषं गमयितुमेव चेष्टते चेत् ।
तच्चित्तापरवशदीनमानसत्वान्नाय स्यात् नियतमहोभिरेभिरल्पैः ।। ४२
आचक्षे स्वयमहमादरेण राजस्ता यत्नैरपि विदधे न लप्स्यसे चेत् ।
भूयस्त्वं पशुपतिमेव तोपयित्वा तत्प्राप्त्यै जुहुधि पुनस्तरा शिरासि ।।४३
इत्यस्या वचनमसौ निशम्य सम्यग्वैदेहीहरणविधावुपायलोल ।
आजघ्नेऽनुचितममृष्यतेव तूर्णं विस्तीर्णे हृदि मदनेन गात्रमस्त्रैः ।। ४४
( अथ विकृतेऽपिशगनै रासभैः सपदिधृत पुरा स्यन्दनेनागत ।
स रघुकुलपते वञ्चनानामर्चितोऽवृणुत पदनत ताडकानन्दनम् ) ।। ४५
ना श्रौपी स तथानुकौशिकमखा चक्रे यथास्मद्विधान्
यद्वा त्वत् परिभावि हेहय-नृपच्छेदोद्धतं भार्गवम् ।
त्वामेतत् कथयामि धूर्जटि-धनुर्विध्वसने तत्र मा
गंस्त दिगन्तरेऽनल इव व्यर्थं पतङ्गार्भक. ।। ४६
पुनस्तरामिति निगदन्नपि प्रभो र्निचक्षमे सततमनिष्टमुच्छ्रितुम् ।
यथायथं कथयति केवल सखा, क्रिया पुन प्रभवितरि प्रतिष्ठिता ।। ४७

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
खरादिवधो नाम त्रयोदश सर्ग ॥

# अथ चतुर्दशः सर्गः

अथ वञ्चयितुं रघुद्वहौ दशकण्ठस्य मुदे ततस्तत ।
विपिनं तदरोचयद्रुचाकुहना-हेम-मृग स राक्षस. ॥ १
गति - वैवस-शिल्पिकल्पनं मृगमेनं बिनिमेषदृष्टय ।
ददृशुर्वनजन्तवस्तदा सकलाश्चित्रमदर्पिता इव ॥ २
समजायत जानकीपते रुटजप्राङ्गणरिंगणो मृग ।
जनलोचनमुच्चरिष्णुभि पटुवभ्रन्निव रश्मिराजिभि ॥ ३
समपादि तदेक - सस्पृहा तमवेक्ष्यैव नरेन्द्रनन्दिनी ।
यदवस्तु–परिग्रहोन्मुखी प्रमदानामृजुता दुरत्यया ॥ ४
दयिताभिमतग्रहं च तं बुबुधे यद्वितथं न राघव· ।
नयने इव तद्वपु श्रिया प्रसरं तन्मतयोऽपि कि हृता ॥ ५
क मृग क च काञ्चनी तनूरितिदर्पादधिमृष्य स प्रभु ।
अनुजार्पित - जानिरन्वगान्मृगमाहर्त्तुमविज्यकार्म्मुक ॥ ६
क्षणमर्भक एव संचरन् क्षणमारादति - दूरत क्षणम् ।
स पुन पुनरीदृशै क्रमैरतिदूरं हरति स्म राघवम् ॥ ७
न यदा करसात् कृतिक्षम तमवोधि प्रथमो धनुष्मताम् ।
कितवं किल रक्ष इत्यसौ विहसन्नेव जघान पत्रिणा ॥ ८
अयि लक्ष्मण ! पाहि पाहि मामहह प्रेयसि मैथिलात्मजे ।
इति रावणसिद्धये तदा विवदन्नेव ममार राक्षसः ॥ ६
अथ तद्वचनं तथा स्वरं समभिज्ञाय तदैकजीवना ।
इति बिश्रवदश्रुगद्गदं नृपपुत्री निजगाद देवरम् ॥ १०
अयि लक्ष्मण ! पाहि राघवं निपतन्तं भुजविक्रमे रिपो ।
कुरु तस्य सहायता जवादसकामा जननीं च मध्यमाम् ॥ ११

अयि भीरु ! विधेहि धीरता ध्रुवमेतत् खलु कैतवं रिपो ।
भुवनाभयदानदीक्षित: क्व पतिस्ते क्व च वैक्लव वच ॥ १२
इति वादिनमेव जानकी नृपपुत्रं बलवेदिनं गुरो ।
अनिनिन्दि तथा दुरक्षरै स यथा तामपहाय निर्ययौ ॥ १३
अथ ता पति देवेरो हृता-दिवि कर्केन्दु विवर्जितामिव ।
इदमन्तरमेव चिन्तयंस्तमसा राशिरवाप रावण ॥ १४
अभिनीत महायतिव्रत शिव शम्भो इति कीर्त्तयन् मुहु ।
चकित नयने विनिक्षिपन्नुपविभ्रान्तमृगद्विजे वने ॥ १५
यति-नाटक-पण्डितेन सा मम भिक्षा वितरेति वादिना ।
ऋजुरर्घविधान-तत्परास्मित-पूर्वं समभाषि राक्षसा ॥ १६
अयि सुन्दरि ! मा कृथा श्रमं कृतमातिथ्यमशेषमेव मे ।
अमृतैरभिषिञ्चतीव मा तव मुग्धे वदनेन्दुकौमुदी ॥ १७
त्वमतीवसुरेन्द्रयौवना कथमस्मिन्नसि भीषणे वने ।
सुकृतानि जयन्ति ते ध्रुवं कवलत्वं यत एषि रक्षसाम् ॥ १८
वद कस्य महात्मन कुल नयसि त्वं महिमानमद्भुतम् ।
वनवासिनिवशपांशुल कतरस्ते दुरितं चिरन्तनम् ॥ १९
अथवा किमनेन मानिनि प्रभविष्णु र्विधिरेव देहिनाम् ।
भवतीमदयस्तपस्विने शशिलेखा च ददाति राहवे ॥ २०
सुकृतैरधुना चिरन्तनैर्ध्रुवमालोक्यपथं समागम ।
सुरयौवतदुर्ल्लभं सुखं मम वाक्यादरणी हि लप्स्यसे ॥ २१
अहमस्मि सुरासुराग्रणी-रमर-प्रार्थन - पाद - संगति ।
त्रिजगत्प्रभविष्णुरम्बुजा-सनसन्तानमणि र्दशानन ॥ २२
भज मा-मनुरूप-संगमे तव रामेण सुदुर्भगेण किम् ।
करपल्लव-लोल-चामरो भजतु त्वा सुरसुन्दरी-जन ॥ २३
इति वाचमुदीर्य्य रावण 'स्फुरदस्तोद्धुर-वाहु-विशति' ।
मुकुटोज्वल-मूर्द्ध संहति: स्फुटयामास निजं वृहद् वपुः ॥ २४

अथ राघव लक्ष्मणोचितां विलपन्तीं कुररीमिवा-सकृत्।
अपहृत्य बलेन विक्लवा-मदय श्वेन इवां पतद्दिवम्॥ २५
अथ तत् परिदेविताक्षरै-र्बलबुद्ध्याकुलितेन चेतसा।
दशकण्ठमकुण्ठसाहसं सहसा तत्र जटायुरापतत्॥ २६
हरतो रघुनाथवल्लभा पथि विघ्नं रचयन् खगेश्वरः।
असुरस्य सुधापहारिणः परिपन्थी भगवानिवाबभौ॥ २७
अयि जानकि! मास्म भैरसावहमस्मि श्वसुरस्य ते सखा।
मयि जीवति नैष सुव्रते कितवस्त्वामपहर्त्तुमीश्वरः॥ २८
इतिवागमृतेन जानकीमभिषिचन्नहितस्य वेगवान्।
स बभञ्ज रथं स धूर्वहं नख - चंचूच्छदसाधन खग॥ २९
विरथ स पपात भूतले भुजयन्त्रो हृतरामवल्लभ.।
स च युद्ध-परिश्रमार्द्रितो बहुबर्षायुत - जर्जर खग.॥ ३०
अथ नि श्वसित. पतत्रिणो विवृताश. स चकर्ष राक्षस.।
सदयामभिभूय जानकीं शिथिलावर्जित पक्षतीच्छदान्॥ ३१
रुदतिमतिमात्र – विक्लवा विकीरन्ती नयने इतस्तत।
तरसा पुनरारुरोह खं भुजयन्त्रे विनिगृह्य ता रिपु॥ ३२
स्वमवाप जवेन वारिधेरधिमध्यं स्वपुरं नभोध्वना।
मृगया विनिवृत्तमग्रजं पथि लज्जा विनयश्च लक्ष्मण॥ ३३
मुहुरस्फुरदग्रजन्मनो नयनं वामसुदन्तीमाप्सतः।
न मनागपि वाग्विवक्षतो हृतबुद्धेरनुजस्य लज्जया॥ ३४
कलयन्ननुभूति मात्मन कथितं चाथ कथंचिदस्य तत्।
असकृत् कुलदेवता स्मरन् दयितादर्शन माशशंस सः॥ ३५
स ददर्श विरुग्ण - पादपं परितस्त्रासरुवद्विहङ्गमः।
तरुवल्लिविलीनवानरं चकितोद्ग्रीवमृगं महावनम्॥ ३६
वनवैकृतमेव न प्रभो पटु - निर्णीतमपादमप्रियम्।
प्रथिताकृतिहेतुजातया जुगुपे केवलया दुराशया॥ ३७

निगदन्नयि सुन्दरीतिताम्उटज - द्वारमुपेत्य राघव ।
अनवाप्ततदुत्तरस्तदा कुपितामेव बुबोध वल्लभाम् ॥ ३८
अधिगम्य तत स्वमाश्रमं च्युत संस्थान-विशेष दुर्भगम् ।
अपि शून्यतमेन तत्र स – त्वरमत्प्राणसमागमेषुणात् ॥ ३९
बुबुधे स ततस्तत प्रिया मृगया शासनता यतोयत ।
विमनाश्चतुरं दुराशया प्रियसख्यैव मुहु प्रतारित· ॥ ४०
परित स निरूपयन्मुहु-र्न यदा ता क्वचिदप्यलोकयत् ।
विललाप तदा-नवी भवत् विपदुन्मोचित धैर्य्यबन्धन ॥ ४१
पिदधामि किमात्मनस्तनु न मया ते सखि विप्रियं कृतम् ।
अयि भाविनि देहि दर्शन मुपिता· सन्तु दुराशिषो द्विषाम् ॥४२
रजनीमपहाय क शशी जलद प्रावृषमन्तरेण क ।
परिचिन्तय चण्डि सर्वथा क इवाय भवतीं विना जन ॥ ४३
क्व गतासि विहाय मा प्रिये वनवासव्यसनैकबान्धवम् ।
वद सम्प्रति का वलम्बनं विपदेकायतनस्य मे भवेत् ॥ ४४
वद मन्दवन विभाति मे विपदेपा विपतत्मयि ध्रुवम् ।
त्वदृते मृगलोचने चिरादहमेवामहमस्मि केवलम् ॥ ४५
अपि सा श्रियमेव केवला न विगेहे स कृपैव केकया ।
ह तथा तिरयन् भवान् पुन-र्वनवासैक-सखा वधूमिव ॥ ४६
उटजं नृपसद्म काननं पुरमद्य क्षितिपासन वृषी ।
सहितस्य यया ममाभवत् कथमेना भगवन् विधेऽहर ॥ ४७
उचितं विहित नृपश्रियाच्युतभाग्यो यदह समुच्छ्रत ।
अविमृष्य मदेकसंश्रया सरले जानकि हा विपद्यसे ॥ ४८
स वधूमपि गोप्तुमक्षमं श्रुतवान्मद्विधमात्मजाधमम् ।
अपि गोत्रभिदासनार्द्ध भाक् स कथं स्यादवनीपुरन्दर ॥ ४९
करुणं वनजन्तवोऽपि मा परिवृण्वन्ति मुखैरुदश्रुभि· ।
दयसे नचिरानुवर्त्तिनं कथमेनं क्व वने निरागसम् ॥ ५०

वचसा वितथेन वैरिणो भवती व्यापदमीदृशं गता ।
अयमस्मि कथं ननु श्वसन् स्वयमालोचित सक्षयोऽपि ते ॥ ५१
वितथा शुभलक्षणप्रथा विफलं जन्म मुनीश्वराशिषाम् ।
चरितं न शिवाय शोभन ध्रुवमासीद्विपदि प्रिये तव ॥ ५२
यदिदं परितो विलोक्यते विपिनं गुल्मलता महीरुहम् ।
नियतं कितवेन रक्षसा वत केनाऽपि हृताऽसि जानकी ॥ ५३
अपि रोदयतो-वनस्थलीं ध्रुवमेणाक्षि हृतिक्षणे तव ।
भयकातर - तारके दृशौ विटपग्राहपरौ करौ च तौ ॥ ५४
किरती भयकातरे दृशौ विलपन्ती विटपेषु भूरिश ।
हतभाग्यममुं मुहुर्मुहु - ध्रुवमाक्रन्दितवत्यसि प्रिये ॥ ५५
अपि मा–मह कश्चिदालपेत् करुणावान् हृदयेश्वरीगतिम् ।
कतुविघ्नकृतामिव ध्रुवं न परेषामपि राघवो रिपु. ॥ ५६
अयि-संतत सर्वदेवता वहिरन्तर्गतसाक्ष – संमताः ।
अयमञ्जलिवद्ध–पूर्वकं भवती' पृच्छति राघव' प्रियाम् ॥ ५७
इति जल्पत एव तस्य ता शुचमाच्छादयिता सुहृज्जन ।
तदनुत्तरलाभ्रसम्भवस्तनुमाशिष्यदमर्ष - विभ्रमः ॥ ५८
नयनेन किरन्निवानलं धृतधन्वा विरराज दोषण. ।
स पिनाक शरासनः पुरा त्रिपुरं दग्धुमना इवेश्वर. ॥ ५९
विनिमुञ्चति यावदाशुगं जगदुज्जासन - कर्मठं विभु ।
प्रणिपत्य पदारविन्दयो रुचितं तावदुवाच लक्ष्मण' ॥ ६०
क भवान् करुणैकसागर. क शिशुस्त्रीद्विजवज्जगद्वधः ।
उपसंहर कोपमात्मविन्नविशन्तीति निरागस. प्रजा ॥ ६१
सहितौ रघुनाथ साम्प्रतं परितस्तं मृगयावहे रिपुम् ।
अचिरादुपलप्स्यसे ध्रुवं दयिता ता द्विषतश्च निष्कृतिम् ॥ ६२
अनुजस्य गिरैव तादृशं रुषमुह्यं प्रवभूव राघव ।
गुणवत् परिगृह्यते वचा न तु वक्तुर्गुरुता समाश्रयात् ॥ ६३

अथ तौ विततज्यकार्म्मुकौ परित. शैलवनान्तचारिणौ।
क्वचिदस्त्ररुरोक्षिते स्थले नवनिर्भग्नमपश्यता रथम्॥ ६४
विहगं च विखण्डितच्छदं मुहुरुच्छ्वासविकं प्रपञ्जरम्।
दरमीलित - नेत्रमाकुलैरसुभि स्वीकृत - कण्ठलोचनम्॥ ६५
अयि तात! कथं दशामिमामुपयासीत्यभिपृच्छतोस्तदा।
रुदतो· परिरभ्य निर्भर नवता प्राप विपत्तये पितु॥ ६६
हरता दशकन्धरेण मे तवपत्नीमिति स्वामिगीतया।
मृतिदु.ख विशीर्णवर्णया सह वाचा स मुमोच जीवितम्॥ ६७
विधिवद्विरचय्य सत्क्रिया विहगेन्द्रस्य पितु र्यथाखिलाम्।
पुनरेव विचेरतुर्वनान्यसकृद्भावित - तद्गुणाविमौ॥ ६८
अथ योजनबाहुनाधृतावपमूर्द्ध्नौ युधितेन रक्षसा।
गिरिगह्वर-घोरमाननं वहता वक्षसि दारुणेक्षणम्॥ ६९
निजखेद - विशेष - दुर्बलावटवी - पर्यटने - समाकुलौ।
समचिन्तयता रघूद्वहौ परिणाम दुरतिक्रमं विधे.॥ ७०
विनिहत्य भुजद्वयं रिपो-र्मुमुचे सानुज एव सङ्कटात्।
रघुनायक शस्त्रखण्डितः स च गन्धर्वपति· स्वपातकात्॥ ७१
अथ निज - पदभाजस्तस्य तुष्ट· सवाचा
तपनतनय - सख्याकाक्षिणो तौ भ्रमन्तौ।
ददृशतुरलिमालाक्रान्त - कान्तारविन्द
स्रुतघन-मकरन्दामोदिता-माशु पम्पाम्॥ ७२
अनुलहरिकटाक्ष्यादम्बुजेष्वास्यलक्ष्मीं
भुजमनुविषवल्लिस्पर्शमाद्रानिलेषु।
अनुपद-मिह भूयो भावयन् वल्लभाया
अविरल गलदस्र' विव्यथे राघवेन्द्र॥ ७३
अथ कथमपि लक्ष्मणप्रयत्नै· शिथिलित-मम्बुरयं रघुप्रवीर.।
धरणिधरमवाप ऋष्यमूकं चकित-कपीन्द्र-वितर्क्यमाणतत्व॥ ७४

तौ निरीक्ष्य विततय्य कार्म्मुकौ वालिभीत-तरल. प्लवगमः ।
तूर्णमाप गिरिकन्दरान्तरं तद्गिरा पवननन्दनश्च तौ ॥ ७५
लक्ष्मणोधिगत - संप्रवृत्तिना तेन सादर निदिष्टपद्धतिः ।
प्राप वासरमिव त्विषा पतिस्तापनि तपनवंशभूषण ॥ ७६
सख्यकर्मणि समान दु·खयो पद्मबन्धुकुलरत्नयोस्तयो ।
सख्यमाधृत नितान्तमुच्छ्रिख प्रेयसीविरहविह्विरेव स· ॥ ७७
तस्य वैरिवध-काक्षिण· कपेर्लीलया सपदि रामसायक ।
अच्छिनद्विदित-वालितेजस· संशयेन सह सप्तभूरुह. ॥ ७८
तेन सालतरुभेदजन्मना-निस्वनेन जनित· श्रुतिज्वरः ।
आपपात रघुनन्दन जवादिन्द्रसूनुरतिमात्ररोषण ॥ ७९
स श्रीरामशरेण मंक्षु विदलत् वक्ष. कपीना प्रभु ।
वेश्म प्राप दिवस्पते-र्जनयित् स्तस्मै सपर्य्यासनम् ।
सुग्रीवस्तु समस्त-वानरचमूकोटीर - नीराजिता
किष्किन्ध्या. प्रभूता रघुद्वहदयादत्ता च तारा प्रियाम् ॥ ८०

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
सीताहरण नाम चतुर्दश सर्ग ॥

# अथ पञ्चदशः सर्गः

अथ राघव-पादयोरनंसीदभिषेकाद्र - शिर. प्लवङ्गराज. ।
उपकारिषु लब्धवैभवाना विनयो हि द्विगुणीकरोति लक्ष्मीम ॥ १
हृतभार इव प्रभुर्बभूव प्रणतस्य व्यसनावसानदृष्ट्या (श्वा) ।
स पुनर्गुरुदुःखमस्य पश्यन् द्विगुणं विव्यथ एव वानरेन्द्र ॥ २
सदयं प्रभुणा कृताभ्यनुज्ञ स्वपुरं प्राप पति प्लवङ्गमानाम् ।
अनुजेन समं तदुक्तवर्त्मा शिखरं माल्यवतश्च रामचन्द्र. ॥ ३
अथ मत्त - मयूरनृत्यबर्हा - गुरुरुच्चावचमेघमाल - भारी ।
ऋतुराविरभूत् कदम्बवल्या मुकुलोन्मेषण पेशलावतार ॥ ४
प्रथमं कलभाकृति क्रमेण प्रसवन् क्रान्त-दिगन्त-चक्रवाल' ।
तिरयन् परिणाहि वर्त्म वायो स्तुलना प्राप घनस्त्रिविक्रमस्य ॥ ५
नवमेघ - महागजाधिरूढ पटुतच्छाय - विनिर्मितात पत्र ।
प्रचलच्चलचामरो वलाकः ककुभि प्रस्थितकाम सार्वभौम ॥ ६
अमुचन्नवमम्बु वारिवाह परितस्ताप निवर्हण जगत्या. ।
शरजातमसौ सुदु.सहं च व्यसने रामहृदन्तरे स काम ॥ ७
प्रथमं नवसेक-गन्धमध्ये विरजोलेशमनन्तर दराद्रम् ।
अथ पङ्किलमन्तत समन्तात् जगदास्यं जलदागमश्चकार ॥ ८
परित. परिपक्वराजजम्बूफलभोगान्मदकोकिलानुलापान् ।
दयिता-वचन-भ्रमेण धावन् स निषिद्धो गलदश्रुणानुजेन ॥ ९
मधुपैरिव मेदुरै पयोदैररुणं केसरमस्य पुष्करस्य ।
अनुशय्य मनोहरं ध्वनद्भिर्वलवद्व्याकुलितो रघूद्वहोऽभूत् ॥ १०
विपचेलिमताल - गन्धबन्धु र्नवजातीमकरन्द तुन्दिलस्तम् ।
अतपत्पतयालु वारिधारा कियदम्भः कणिकोत्किरः समीरः ॥ ११

विकसत्कुसुमाकदम्बवल्ली रघुनाथेन विलोकिता कथञ्चित् ।
स्मरता पुलकाङ्कुरानुविद्ध-स्तनभारं-तनुमुत्पलायताक्ष्या. ॥ १२
मुदिरा-वलिमेदुरा नभ श्री स्तनितोद्गारिगुहागृहाश्च शैलाः ।
यवसाङ्कुरकोमला च पृथ्वी रघुसूनोरवलम्बनाय किं स्यात् ॥ १३
उपलब्ध - महोदये समन्तान्मलिनीकुर्वति विश्वमम्बुवाहे ।
शुचिता परिरक्षितु स्वकीया सभयेवापससार हंसमाला ॥ १४
प्रभुरुन्मदभृङ्ग - लभ्यमानं ललितं पुष्पमवेक्ष्य मालतीनाम् ।
सुरतान्त - निमीलितार्द्धमुग्धं विलपन्नस्मरदीक्ष्यणं प्रियाया' ॥ १५
नवताण्डवितै· शिखाकलापैर्घनमातन्व्यतिषङ्ग-वर्द्धमानै ।
अपतन्मतिदूरमेव बन्धाः शिखिनस्तं श्रुतिदु सहैर्निनादै. ॥ १६
अधर द्युतिमिन्द्रगोपकेषु स्मितशोभा नवयूथिकासु तस्या ।
समचिन्तयदीश्वरो रघूणा वहु रागानुगृहीत-जीवलोक ॥ १७
निरवापयदम्बुदः समन्तात् परितापं जगतो निदाघजातम् ।
विषमो विरहानल - प्रतापो नव एवास्य दिने दिने वभूव ॥ १८
धनुरिन्द्रधनु शराश्च धाराः पयसा वारिद एव कामदेव ।
न विदग्धसभेषु वर्णनीयं हरनेत्रानलभस्म विश्वजैत्रम् ॥ १६
वियदन्तविलम्बमानमैन्द्रं धनुरुन्मीलित-वर्णराजि चित्रम् ।
गलितं हरिणेक्षणे प्रियाया· स्तनयोः क्षौम-मसंस्त राघवेन्द्र· ॥ २०
तडिता तपनीय गौरगात्र्या परिरब्धं नवमम्बुदं स पश्यन् ।
दरमीलितलोचनो निदध्यौ मुहुरुत्क स कुचोपगूढमस्या· ॥ २१
गगन जलदान्धकारमग्नं घन-खद्योत–कदम्बकप्रकीर्णम् ।
असितोरगमौलिरत्न – चित्रं यमुनावारि विडम्बया वभूव ॥ २२
द्वितय विदधे जन सखेदं परित प्रोन्नतवारिदे दिगन्ते ।
विधुमण्डलमन्धकारमग्नं वदनं तस्य च मिन्दुभिन्नवर्णम् ॥ २३
मुहुरुन्नमता घनाघनाना प्रसभं तत्र भरेण संकुजन्त्यः ।
रघुनायकमार्द्रखेदमारात् परिवव्र· करुणाकुला इवाशा· ॥ २४

नवमम्बुपयोधर - प्रकीर्णं स्थितमम्भोजदलेषु रामचन्द्रः ।
बुबुधे हरणोपमर्दसद्य-स्त्रुटितं मौक्तिकगुच्छमायताक्ष्या ॥ २५
चुलुकी भवदम्बरैः पयोदैर्दिवसे तत्र तमस्विनीयमाने ।
विरहान्तरयो रथाङ्गनाम्नोर्मिथुनं वीक्षितुमक्षम स आसीत् ॥ २६
सरित परित पयोधिमाशु घन-संवर्द्धित दुर्निवार-वेशा ।
विरहात् दिवि सपिताविदूरा (दक्षि) मालैव शुचश्च राघवेन्द्रम् ॥ २७
घनवारित-कौमुदी-प्रसङ्गं कुमुदं वारि ममज्ज पल्वलानाम् ।
अहिताहितजानकीवियोगं रघुनाथस्य मनश्च दु खसिन्धौ ॥ २८
विभिदे सरिता रय' प्रसर्पन्नतिदुर्लंघ्यमपि क्रमेण सेतुम् ।
निविडं रघुनायकस्य धैर्य्यं विरहव्याधिविवर्द्धिताश्च शोकाः ॥ २९
विनिगुह्य कथंचिदाधिमाद्रं मतिमान् कृत्य विशेष-जागरूक. ।
समयं क्षिपते प्रमादभाजे कपिराजे प्रजिघाय लक्ष्मणं सः ॥ ३०
इति चैनमुवाच वत्स गत्वा मम वाक्येन कपि तथा ब्रवीथा ।
अलस. परवेदनामविद्वान्न यथा वालिपथं प्रपद्यते स ॥ ३१
अथ दाशरथ स्रवद्भिरस्रैरसकृत् क्लिन्नतदंघ्रिरेणुमौलि ।
स जगाम कपे पुरं पदाभ्या मनसा केवलमस्य पादमूलम् ॥ ३२
अथ चार-निवेदितोपयानं त्वरित प्रत्युदियाय तं कपीन्द्रः ।
स च त विनयावनम्रमारादपरं राममिवादराद्ववन्दे ॥ ३३
नगरीं कृतमङ्गलाममात्यै· सह तेन प्रविवेश वानरेन्द्रः ।
विभवानुपदर्शयन् समन्तादसकृद्गीत-रघूद्वह प्रशास्ति ॥ ३४
अथ तं परमासनोपविष्टं कथयन्तं व्यसनानि राघवेन्द्रो ।
निजगाद पति· प्लवङ्गमाना सभय-स्नेह-कृपा-त्रपा विलोल· ॥ ३५
विरम क्षणमस्मिञालम एष ध्रुवमक्षालित-राघवेन्द्रखेदः ।
हत दैव-विनिर्मितै. पयोभिर्निगृहीतव्यवसायमोघतृष्ण ॥ ३६
अथवा कपय समीयिवासः पटु फूत्कृत्य हरन्तवारिवाहान् ।
श्वसितै सरितश्च शोषयन्तमधुनैवास्तु शरत् सता च या नः ॥ ३७

इति सज्जित सर्व-यूथनाथ' प्रचचाल प्रवर. प्लवङ्गमानाम्।
स्थगयन् ककुभि' क्षितिर्दिवं च प्रलयाम्भोनिधिसंनिभैरनीकै. ॥३८

उपगम्य विदूरत' प्रणम्य स्थितिमादिश्यमशेष-यूथपानाम्।
परिरभ्य विभुर्भुजोपपीडं निजपीठे विनिवेशयावभूव ॥ ३९

परित कपियूथपानसंख्यानभिपश्यन्मुमुदे पती रघूणाम्।
नहि भूरिसहायसंभृताना फलसिद्धि परिभूयतेऽन्तरायै ॥ ४०

स्फुटमृक्षहरीश्वरानशेषान् सुहृदाकीर्त्तित वीर्य्यवश-बुद्धीन्।
वहुमानपुर सरं ददर्श प्रभुरुत्साह-विवर्द्धनै कटाक्षै ॥ ४१

अथ राममुवाच सूर्य्यसूनु स्तिमितोद्ग्रीवचमू निरीक्ष्यमाणम्।
अमृतप्रसरीयति श्रुतीना कृतीना सामयिकोऽहि वाग्वलास ॥ ४२

कियतो दिवसान् विलम्बभाजो महदागो मम सोढुमर्हसि त्वम्।
जलदोदय-विघ्नतोपयानान् परितो यूथपतोन परिग्रहीतुम् ॥ ४३

ध्रुवमीश हरि प्रियासहाय. सुरकार्य्याय भवानिवावतीर्ण ।
अवतेरुरिमे च देवताशा परिचर्य्या युवयोर्विधातुकामा ॥ ४४

तव पादरज कणप्रसादैरसकृद्वृ हित - तेजसाममीषाम्।
न सहेत महेश्वरोऽपि सद्य रिपुकीटा कतमे प्रकोपमात्रम् ॥ ४५

तदमून् विनियुज्य कार्य्यसारे प्रथमं वासनिरूपणेऽस्य शत्रो.।
कतमा किल भित्तिमन्तरेण स्थिरबुद्धेरपि चित्रकर्म्म सृष्टि ॥ ४६

स तथेति रघूद्वहेन धीमान् प्रतिपन्न कपियूथपानदिक्षत्।
रचिताञ्जलि याचतस्तदाज्ञा मुपहर्त्तु जनकात्मजाप्रवृत्तिम् ॥ ४७

अखिलेष्वपि तेषु राघव स्वं फलमाशास्त सदागतेस्तनूजे।
गुणभूमिभृतामपि प्रकामं कुलजन्मा हि विशिष्यते प्रभावः ॥ ४८

अचरन् परितोदिश प्लवङ्गा मुहुरभ्यस्त-विदेहजा-स्वरूपा'।
कथमप्यनिवारणीयवेगा रघुसूनोरिव चित्तवृत्तयस्ते ॥ ४९

अथ भूरिभिरुत्कटै प्रयासै प्रचरन्तोऽप्यनवाप्तसिद्धयस्ते।
अलभन्त कुयोगिवत् पुरस्तात् विहगं विघ्नमिवातिदुर्विलंघ्यम् ॥ ५०

चरणेन विदग्धपक्षमब्धिं जलपानाय शनैः शनैः व्रजन्तम् ।
तुहिनाचल-सूनु-सदिदृक्षा-चलितं बिन्ध्यमिवोपलक्ष्यमाणम् ॥ ५१

वपुषा विषमेण वानराणां प्रथमं मूर्त्त इवैष मृत्युरासीत् ।
चरमं तु जटायुवृत्तवाचा प्रणय-स्निग्ध-मना सखा गरीयान् ॥ ५२

निजगाद च पृच्छतः कपीन्द्रान् स जटायोः सहजः खगेन्द्रसूनुः ।
स्वपुरे दशकन्धरेण गुप्ता विधुरा ताम्यति राघवप्रियेति ॥ ५३

अथवागमृतेन ताक्ष्यसूनोर्निविडानन्दित-चेतसा कपीनाम् ।
ध्वनितानि दरीमुखैरशेषैरनुदध्वान मुदे विवन्ध्य शैलः ॥ ५४

वेशादब्धिं तितीर्षोः प्रतिभयमकरग्राहमभ्रंकषोर्म्मि-
रूपं सद्य स्थवीय किमपि रचयतो वायुसूनोस्तदानीम् ।
पादन्यासं निकुञ्जद्भुजगपति-फणाग्रेण-निर्व्यूढमूल-
कम्पोत्कम्पः कथंचित्त्रिभुवन-सुकृतैरेव सेहे महेन्द्रः ॥ ५५

तस्य प्लवङ्गमपतेः प्लुत-वेगवातै —
सिन्धोर्द्विभागमभजत् पयसां समूहः ।
तत्केवलं नव विलंघनवर्द्धमान-
व्रीडातिरेक-तरलं हृदयं विदद्रे ॥ ५६

आसीदियं रघुपतेर्दयिता वहन्तीं
लङ्का रसातलमिषात् क्रमसंहृतात्मा ।
साधारण-प्लवग-शावक निर्विवेश
स्वैरं सुवेल-कटके निदधे पदं सः ॥ ५७

दौवारिक-भ्रूकुटि - कम्पित लोकपाला
देवाङ्गना - चटुनिरादर-कुम्भदासाम् ।
सप्तर्षि - नर्त्तन - परायणवेत्र - हस्त-
रक्षोऽवटुं स नगरीं प्रविवेश शत्रोः ॥ ५८

प्राकारान् कनकैर्गृहान्मणिगणैः स्वर्गंगया दीर्घिकान्-
आरामांस्त्रिदशद्रुमैः सुरगिरेः शृङ्गैर्विहाराचलान् ।
दासीदासशतानि देवमिथुनै र्लङ्कापते पश्यता-
श्लाघाचञ्चल-मौलिना हनुमता मेनेऽल्पमैत्रं पदम् ॥ ५९

विश्वग्विचिन्त्य रजनीचरपत्रनेत्रा-
मप्राप्य खेदजलधौ विनिमग्नचेताः ।
क्रामन् पुनस्तत इतः स ददर्श किञ्चित्
कं केलिकाननमसूर्य्यकरप्रचारम् ॥ ६०

लंकेशेन निजप्रणामविफलीकारान्मुहुः प्रेषितै
क्रव्याद्-प्रमदाशतैः प्रतिभयैः संतर्जयद्भिर्वृताम् ।
तत्र क्षाममलीमसा सुरपतेर्गुप्तस्य-वाचाधृत-
प्राणान् वाप्यमुखीं रघूद्वह-वधूमैक्षिष्ट शाखामृगः ॥ ६१

अथ कथमपि तासु निर्गतासु
क्षितिपवधूं त्रिजटा विवोध्य-मानाम् ।
निकट विटपिनोऽवतीर्य्य तूर्णं
सविनयमाह नत समीरसूनुः ॥ ६२

मागाः खेदं जननि कुशली राघवः सानुजन्मा-
मा जानीयाः पवनतनय तन्नियोगादुपेतम् ।
जीर्णारण्यं जगदवयती स्तत्तदापद्विशेषै-
र्नूनं पत्यु-स्तव वहुमतस्त्वत्कृते जीवलोकः ॥ ६३

भूयोभूयः प्रणम्य क्षितिपतितनये याचेऽत्र भवतीं-
मागाः खेदं विदध्या मनसि धृतिममू लध्या श्च दिवसान् ।
लङ्कारोद्धारमारात्तपनसुतसख द्रष्टाऽसि दयित-
माहक्षैर्यूथनाथैरपरिमिततरै स्तीर्णाम्बुनिधिभिः ॥ ६४

इति वचन सुधाभिर्जानकीं प्लावयित्वा-
समदिशत हनूमान् रामभद्राङ्गुरीयम्।
प्रतिफलदखिलागी तत्र सर्वात्मना सा-
चिर विरह गतासोत्कण्ठयेवान्वमाक्षीत्॥ ६५

अभिज्ञान पत्युर्जनकतनया वीक्ष्य सहसा
समन्तादुन्मीलत्पुलकमकरोदङ्गमखिलम्।
ततो भूयो-भूयो-वपुषिनिदधाना पुनरसौ
परानन्द वेद्यान्तर-परिचयोन्मुक्तमभजत्॥ ६६

इति श्री मार्कण्डेयदेव विरचिते दशग्रीववधे महाकाव्ये
सीता सदर्शन नाम पञ्चदश. सर्गः॥

# अथ षोड़शः सर्गः

आनन्दनिन्द्रामनुभूय भूय क्रमेण सीताधिगत -प्रबोधा ।
कथंचिदश्रुप्रतिरुद्धकण्ठी सन्देशलिप्सु हनुमन्तमूचे ॥ १
दिष्ट्या त्वया वीर विशल्यभावं नीताऽस्मि सन्देशहरेण पत्यु ।
विपक्षदासी विनतेव खिन्ना पूर्वं सुपर्ण्णेन हृतामृतेन ॥ २
पिता च तेऽष्टासु दिगीश्वरेषु स्थाने जगत्प्राण इति प्रसिद्ध ।
अबान्धवोऽरण्यचरेऽपि तस्मिन् यदात्मजन्माऽसि दयालुरेवम् ॥३
सखी न कंचित् तपनात्मजस्य मा मन्दभाग्यामनुशोचमानः ।
चतुर्दशाना जगता तदेकमालम्बनं गोपयेते शरीरम् ॥ ४
क स त्रिलोकीतिलक प्रवीरो दूरन्तचिन्ता क च वेदना स्ता ।
स एष जन्मान्तर-पातकिन्या ममैव पाणिग्रहणापराध ॥ ५
एव दुरन्त-व्यसनानुवन्धैरनुक्षण काक्षित संक्षयोऽपि ।
तदेककारुण्यलबा-भिमाना - दात्मानमात्मा बहुमन्यते मे ॥ ६
ध्रुवं प्रवीरो नयनैकचन्द्र स्वमाधुरी प्लावित-सप्तलोक ।
अमुं जनं कृष्णमवाप्य पक्षं दिने-दिने कार्श्यमुरीकरोति ॥ ७
साहं मुहु प्रार्थित - दुर्ल्लभेन दूना तनुत्याग - महोत्सवेन ।
( दूयेत रामार्क्ष सुतस्य तै स्तैर्दशाविशेषै परिचिन्त्यमानै ) ॥ ८
स चापि वत्सो भरतानुजन्मा किञ्चित् विजानाति विनोदनानि ।
अभागिनीं मामनुजातमन्योस्तदेक - शेषस्य महोदरस्य ॥ ९
मदेक-चिन्ता-कलुषीकृतस्य तदेक वनु - वर्त्तमाने ।
कच्चिन्न तस्मिन् कृपणे कथं चिदस्निग्धमालोकितमार्यसूनोः ॥ १०
भ्रातुस्त्रिलोकी - तिलकस्य तस्य तैस्तैरसह्यै र्व्यसनैरजस्रम् ।
सौमित्रिमेकाकिनमद्य नूनं दूनोति मन्युः पुटपाककल्प ॥ ११

इतीरयित्वा पवनात्मजाय अश्रुस्त्रुति - क्षालित-गण्डपालि. ।
स्वमौलिरत्नं प्रतिसदिशन्ती पुनर्बभाषे जनकेन्द्रपुत्री ॥ १२
अभागधेयान्तरितात्मनो मे शिरोमणि कारित तत् प्रणाम ।
समर्प्य चिन्ता - विधुरेवमेतद्रघूद्वहे मद्वचनं निधेहि ॥ १३
अभाग्यवानेष जन कृपाब्धौ त्वया यथा शक्त्यनुकम्पनीय. ।
त्रैलोक्यदीपः पथि संशयानामत्यर्थमात्मा च न संनिधेय ॥ १४
अज्ञात - तात - प्रसुसोदरोऽयं त्वदर्थमङ्गीकृत-वन्यवृत्ति ।
कृतापराधोऽपि कृपार्द्रमेव साधु कनीयानवलोकनीय ॥ १५
स चैकवीर कपिचक्रवर्त्ति सर्वात्मना त्वामनुवर्त्तमानः।
विलोकनीयः सविशेषहार्द बहित्र - भूय परमापदब्धे ॥ १६
अन्ये च ते ते हरियूथनाथा सभावनीया मधुरैर्वचोभि. ।
आपन्निमग्नस्य वनैकवृत्तो कुते तवा शंसित देहपाता' ॥ १७
अनन्तरं भ्रातरदूरभाजं त्वं लक्ष्मणं वक्तुमुपक्रमेथा. ।
कल्याणमाश्लिष्य मुहुर्मुहुस्त्वा विदेहजा जल्पति मन्मुखेन ॥ १८
अन्त' प्रविश्येव विपद्विशेष रुन्मादिताया मम तानि तानि ।
क्षमस्व रूपाणि वचासि साधो निशाचर छद्म-गृहीतबुद्धे ॥ १९
आर्य्यस्य निर्भाग्य-जनप्रियस्य दूनोऽपि दु खैर्भव माप्यधीर. ।
त्वमेक एवास्य कृतोऽहि धाता शोकान्धबुद्धे-रवलम्ब्य-यष्टि. ॥ २०
अपि स्खलन् खेद शतैरसह्यै रार्य्यस्त्वया वर्त्मनि संनिधेयः ।
सखानुजः सूनुरमात्य - भृत्यस्त्वमेक एवासि हितस्य सर्वम् ॥ २१
आर्य्येण मन्युग्लपितेन दैवादस्निग्धमुक्तोऽपि गम शुचं मा ।
स्पृशत् करैर्यद्यपि पद्ममुष्णै तथाऽपि सूर्य्योऽहि तदेकबन्धु. ॥ २२
ततस्त्वया मद्वचसा हनुमन् ननामय प्रश्नविधान पूर्व. ।
आशाकुरोभेदेन वाम्बुवाह स चापि वाच्य. सुहृदार्यसूनो. ॥ २३
नून विधात्राऽपि दयालुनैव वंशप्रधानस्यमनोः कनीयान् ।
भवानबन्धोरयमार्य्यसूनो दु राधिदायादतया निदिष्ट ॥ २४

अस्माकमस्मिन् विपदम्बुराशौ निमज्जतामप्लवसंश्रयाणाम्।
कथंचिदेको विदधे विधात्रा द्वीपोभवानुच्छ्रित - कल्पवृक्ष ॥ २५
स त्वं तथा सचर कार्य्यसारे निजैरनीकै सममप्रमत्त.।
अन्योन्यवृद्धैः सुहृदो यथाऽवा योगोवसन्तस्मरयोरिवस्यात् ॥ २६
सखा विषाद - ग्लपितस्तवाऽय सौमित्रिरद्यापि किशोर एव।
अनन्य धौरेयतया महात्मन् भारोनिषर्ण-स्त्वयि सर्व एषः ॥ २७
कथं चिदुत्तम्भित तीव्रमन्योरादाय तस्या वचनान्यमूनि।
कृतप्रणामो हनुमान् प्रतस्थे धारानवाप्य स्तु ति-धौतगण्ड· ॥ २८
हनुमतश्चक्रमतस्तदानीं लागूल - वज्राभिहतं समन्तात्।
क्रीडावनं तत् प्रसभं बभञ्जे दर्पेण सार्द्धं रजनीचराणाम् ॥ २९
उद्यानपालान् पतत स शस्त्रान् नि.शेषयामास तथा कपीन्द्र ।
वार्त्ताहरै स्तत्र यथा बभूवे विहङ्गमैरेव कटु - कणद्भि ॥ ३०
तन्नाद संविग्नतया तदानीमुदायुधान् रात्रिचरानुपेतान्।
तैरेववृक्षै· प्रहरन् हनुमान् निनाय निद्रामपुनर्विबोधाम् ॥ ३१
अथ प्रकोपोत्तरलेन पित्रा नियुक्तमक्षं सवलं हनुमान्।
द्रुमायुध सन् पितृकाननैकप्रियं स चक्रे पितृकाननार्हम् ॥ ३२
पर्य्यस्त पोलस्त्य महारथं तत् विध्वस्तदोस्तम्भ वनध्वजाग्रम्।
अक्षच्छिदा व्याकुलमेव सर्वं पपात चक्रं रजनीचराणाम् ॥ ३३
भ्रू भङ्गलीलाजित - लोकपाल तथाभिभूतं कपिना हठेन।
ह्रीशोकरोषात् रजनीचरेन्द्र दूरादहंपूर्वकयाऽभिजग्मु· ॥ ३४
उत्तिष्ठमानं पितरं प्रकोपा - दुपेयिवानिन्द्रजिदादरेण।
निवर्त्त्य काल-भ्रू कुटी-कराल-कोदण्डपाणि कपिमाससाद ॥ ३५
स वानरस्तेन समं मुहूर्त्तं विहृत्य संग्राम - कुतूहलेन।
अन्तर्निगू ढव्यवसाय तत्त्व स्व तस्य पाशेन निबद्धमैषीत् ॥ ३६
संताड्यमानं परित पलादै कपि पुरोधाय स पाशबन्धम्।
पुर·सरावेदित दोर्विलासः सिंहासनस्थं पितरं ववन्दे ॥ ३७

स पृच्छ्यमानो दशकन्धरेण कस्त्वं कुतो वेति मुखैरशेषैः ।
आत्मानमस्मै कथयावभूव दूतं विभो र्दाशरथे कपीन्द्रः ॥ ३८
जगाद चैनं जगदेकवीरः समस्त यूथेश्वर कोटियूथः ।
किशोरलीला दलितेशधन्वा त्वा मन्मुखेनेदमभिब्रवीति ॥ ३९
छलेन जाया हरिणावमान सेतु पुलस्त्यादरयन्त्रणात ।
अद्यापि सीता प्रतिदेहि तूर्णं नाकालिकं नश्यतु राक्षसश्रीः ॥ ४०
इत्यस्य वाणी मनुभूय तावत् भ्रूभङ्ग दुष्प्रेक्ष्य निटालमान ।
उत्कम्पयन् पिष्टपमट्टहासैरुवाच राजा रजनीचराणाम् ॥ ४१
अहोऽनु कष्टं विहताऽसि लज्जे यद्भाषते मर्कटकीट एष ।
मनुष्यडिम्भं जगदेकवीरम् त्रैलोक्यजेतु प्रसभं पुरो मे ॥ ४२
सोऽपि प्लवङ्गाश्रयदुर्मदात्मा लंकेश्वर क्षाम्यति धिग्विडम्बः ।
तेनाऽपि रुष्टेन महेन्द्रजेतु विनाश मायास्यति मे समृद्धि ॥ ४३
ज्ञाते चिरादेव मनुष्यसूनो प्लवङ्ग-मित्रस्य वलप्रभुत्वे ।
परीक्षित संप्रति जल्पितै-स्ते मुनीन्द्र सेवाजनितो विवेक ॥ ४४
इत्युचिवास्तं रजनीचरेन्द्रमाध्मायमान निजविक्रमै स्तै ।
तृणायमत्वा मरुदात्मजन्मा सहासमेव पुनरावभाषे ॥ ४५
विजानतो हेहय - वालिलीला नैवावमान्या नरवानरास्ते ।
विशेषतो हेहयजिद्विजेता विध्वस्तवाली रघुवंशदीपः ॥ ४६
विकत्थसे यन्मुहुरुन्मदिष्णु रात्मानमेवावमतस्त्रिलोकः ।
विभाव्यमानं ग्रसनोन्मुखस्य तत्केवलं चेष्टितमन्तकस्य ॥ ४७
इति ब्रूवाणस्य तदुक्तिरोषात् विसर्पदक्षय्यविनाशमन्युः ।
लङ्कापति स्वाननुगानदिक्षत् विहाय वद्धस्य समीरसूनो ॥ ४८
दुकुल - तूलावृत - सर्वगात्रः संयोजितो वायुसखेन वीरः ।
स किञ्चिदुत्पुच्छयमान एव प्रासादमभ्रंकषमारुरोह ॥ ४९
गतोगतोऽयं किपिरित्यनीचै राक्रोशतामेव निशाचराणाम् ।
समीरसुनु प्लुत - लाघवेन लङ्कामशेषा तरसा ददाह ॥ ५०

स्नेहेन सूनोरिव निर्भरेण दूरादवज्ञातदशास्य-भीति' ।
ज्वलन्तमग्निं परित' पुरं तत् भेजे सखायं सगण समीरः ॥ ५१
जज्वाल लङ्का परित कृशानुर्मूर्त्ति. प्रताप. किमु राघवस्य ।
धूमावलि र्द्या मुहुरुत्पपात निशाचराणामयशो लतेव ॥ ५२
अतर्जयन्मूर्च्छित-तर्जनीका लंकेश - भृत्या ससहायमग्निम् ।
संवर्त्तकादींश्च निजाम्बुपूरै दूरादनिर्वापयतोऽम्बुवाहान् ॥ ५३
स सम्भ्रमे तत्र जने समन्तात् कथं चिदुन्मोचित शृङ्खलाक. ।
त्रासादपश्चात् कृतदृष्टिरेव दुद्राव वन्दीनिवह' सुराणाम् ॥ ५४
आगारमन्तर्गत - बालवृद्ध प्रदीपयन् हेममयं क्षणेन ।
आसिंचतामेव जलैर्जनाना पिण्डीचकार ज्वलनो गरीयान् ॥ ५५
वैदूर्य्य - कुड्येषु परस्परस्य प्रतार्य्यमाणै' परितोऽनुविम्बै ।
अन्योन्यमाकारयितुं भ्रमन्तौ ददाह वह्नि· सहितौ युवानौ ॥ ५६
न दिग्गजाना दशनाभिघाता
न चापि शस्त्राणि निशाचराणाम् ।
स एव वह्निर्दरदग्धमूर्त्ते-
स्ता कुम्भकर्णस्य वभञ्ज निद्राम् ॥ ५७
व्योम ज्वलद्वह्निशिखा - करालं सतापपङ्क कनका च भूमि ।
दूरन्त नक्राणि जलानिसिन्धोर्लङ्कावधूनां शरणं किमास्ताम् ॥ ५८
प्रदाह भीत्या सरसीं प्रविश्य दग्धेषु भैमेषु तटेषु लोकः ।
न स्थातुमीशो न च गन्तुमीश स्तत्रैव ताप क्वथितो ममार ॥ ५९
विदह्यमाना भवना कथंचित् निष्क्राम्य रक्षामनु-संदधान' ।
सन्तप्त जाम्बूनद-पङ्किलासु-व्रजन् विपेदे पदवीषु लोकः ॥ ६०
माणिक्य-वेश्मान्तर विम्बिताङ्ग'
काचित् प्रियं दग्धमिव प्रतीत्य ।
स्वस्थान एव प्रतिपन्न-मूर्च्छा-
वर्द्धिष्णुना वायुसखेन देहे ॥ ६१

दूरादन्धीकुर्वन् नयनयुगलमनुदिशमभिवृद्धैर्ज्वालजालै-
रुच्चै रुच्चै र्द्रवदखिल कनकमयपदवीक ।
आरादाराद्वापी कूपान् विदधदहिमकरजलभरदुर्गा-
लङ्कालोकानेकोऽनेकानत-पदनिलसुत वचनकृदग्नि॰ ॥ ६२

अथ सखितनयानुरागादिव प्रचुरमुपकृतस्तथा वह्निना ।
पुनरपि विनत॰ सती पादयो॰ क्रममतनुत निर्गमे मारुत॰ ॥ ६३

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
लङ्कादहनो नाम षोड़शः सर्गः ॥

# अथ सप्तदशः सर्गः

अथ रघुप्रवरस्य वियोगिनो नयननीरभरैरिव निर्जिता ।
जलमुचोऽविरतं प्रतिपेदिरे दिवि तथा वितथाखिल गर्जिता ॥ १
अपघनं नभ एव मनोभुवो वलयितं च धनु शशिमण्डलम् ।
भवशरा (गलिता) सुमनोभयात् रुरुचिरे रुचिरे शरदागमे ॥ २
विशद - चन्द्रमयूखमनाविल-प्रवहण क्वणदुन्मद - सारसम् ।
उदलसद्भुवनं प्रति पद्मिनी-स्मरवशादवशालि मधुव्रतम् ॥ ३
असकृदुच्छलत पयसा निधे-र्जलकणैरिव धौतमुदित्वरै ।
धवलयद्भुवनानि हिमद्युते-रविकलं विकलं समभूद्वपु ॥ ४
जलधरापगमादुपसेदुपा तत इतो नलिनीमनुवभ्रता ।
मुदितहंसकुलेन करम्बिता न सरसा सरसा कुरुते स्म कम् ॥ ५
व्यरमदिन्द्रधनुर्मुहुरस्फुरद् विविध - वर्णमयी शुकसंहति ।
अगलदम्बुदगर्जित - मावभौ घनमहोनमहोक्षरवस्तुक ॥ ६
विरहिता दयितेन पयोमुचा प्रतनुता सरित प्रतिपेदिरे ।
श्लथ-विलम्बित-कोमल-वेणयो मदन - वेदन वेगहता इव ॥ ७
रघुपते सह नि श्वसितोर्मिभि - र्निरगमन्नतिदूरतरं दिश ।
पवनसूनुसमागम - वार्त्तया परमुदारमुदा प्रसिता इव ॥ ८
निजरज पटलेन हलिप्रियान् परिहसन्त इव च्युतसौरभान् ।
प्रतिवन परितो विषमच्छदा मुमुदिरे मुदिरेऽपगते सति ॥ ९
परिणमत् कलमाग्रिममञ्जरी-प्रणयिनी रुरुचे शुक-संहति ।
मदनभूमिपतेर्जयकेतन - श्रियमिता यमिता परिधायिनी ॥ १०
असकृदिक्षुवनं परितो द्विपा समरुवन्मद - सेक सुगन्धय ।
परिभवन्त इवाचिरविद्रुतं ध्वनिकरं निकरं जलदायिनाम् ॥ ११

प्रियतमा निज-चंचु समर्पितं-रसतरोरिव नूतनमङ्कुरम् ।
सरसि कोकयुवामुहुरुन्मद सुविशदं विषदण्डमसिश्वदत् ।। १२
सरसि विम्बित मैन्दवमण्डलं प्रियधिया परिरब्धुमचेष्टत ।
असकृदुन्मदना कलहंसिका-कमलकोष-विकासनिभ द्युति ।। १३
अविरलैः करताल भवैरवै-स्तत इत क्षुभिता अभिनिर्भरम् ।
उदसहन्त पचेलिम-मुच्छ्रितं न कमलं कमलं च ञुगु शुका ।। १४
निरुरुधे न तथा मुहुरुत्सुका वहुविभीषिकयापि मृगावली ।
कलमगोपिकया नववल्लकी-स्वरजिता रजिता वचसा यथा ।। १५
अपचयेन पयोधरसम्पदा निववृते शिखिना मदताण्डवम् ।
दधति पक्षभृत सुहृदा क्षये सुखलवं खलवन्नखलूत्तमा ।। १६
निजगुणैरनुतापित - पट्पदं सुललित सुवहा कुसुमोत्कर ।
स्फुरित एव पपात महीतले विधिगतिधिगतीन्द्रियदु खदाम् ।। १७
अपि विदूरतमस्य महात्मन कलुषमुन्मतिथं महिमाक्षम ।
जलमगस्त्यमुने र्द्युतिरेवयन्मविलमाविलमानयदच्छताम् ।। १८
अप पयोधर-मम्बर-मिन्दुना विशदमम्बुमराल-विभूतिभि ।
गुण - विशेष विवेकबुधा शर-च्छुरितयोचितयोगमकल्पयत् ।। १९
प्रियविधित्सुतयेव रघुप्रभो-र्द्रुतममित्र-पुरी मभियास्यत ।
प्रतिदिन ववृधे सवितुर्महोऽसुदम कर्दम-कर्षण-कृत्प्रथाम ।। २०
तत इत शशिमण्डल पाण्डुभीरतिपतेरिवदिग्जय कीर्त्तिभि ।
घन-विकस्वर-काश-विभूतिभिर्नवसुधा वसुधामिव लम्भिता ।। २१
इति शरद्विभवेन निरन्तरं रतिपति· परिवर्द्धित - पौरुष ।
रघुपति प्रजहार दिने दिने शरचयं रचयन्नतिदु.सहम् ।। २२
रघुपतेर्विपदेक-निवन्धनं निजमधत्त कथं जन-जीवितम् ।
हनुमदागमनं प्रतिपालयन् विकलये कलये हृदि शल्यते ।। २३
अथ मुखप्रभयैव विदूरत· स्फुटमुदीरित सिद्धि - मुदीर्णया ।
स हनुमन्तमपश्यदभिस्फुरत् भुजबलं नवलंघितवारिधिम् ।। २४

अपि विलोकितवानसि जानकीमपि मम ध्रियते हृदयेश्वरी ।
इति नमन्तमपृच्छदयं मुहु प्रभविता भवितान निभ द्विज ॥ २५
स च रघुप्रवरस्य पदाम्बुजे मृगदृशो विनिवेश्य शिरोमणिम् ।
सकलमेव सभाजन-चेतसा कृतमुदं तमुदन्तमवर्णयत् ॥ २६
रघुपतिर्दयिताभरणं च तत् धृति निवेश्य निमीलितलोचन· ।
अभवदन्य इव क्षणमुल्लसत् पुलक - जालक - जाततनुच्छद ॥ २७
अपि मुहु श्रुतमश्रुतवत् पुन पुनरुदन्तमपृच्छत सुभ्रुव ।
रघुवरेण मुदं परिवर्द्धयन् पवनजो वनजोपमचक्षुषा ॥ २८
स वचनै श्रवणामृत-दुर्दिनै प्रमुदितो निविडं परिषस्वजे ।
विरहदोर्युगलेन नतं तदा श्रुतनय तनय च नभस्वत ॥ २९
अथ विभाव्य मुहुर्मुहुरात्मना कृशतनोर्विरह-ज्वर - वेदना ।
रघुपतिर्वलवत् परिविव्यथे घन दया न दयादसिचेतसि ॥ ३०
स दयितामभिपत्तुमनास्तदा वलयितं रिपुदुर्गमदन्यता ।
नगरमेवबभु· स्वभुजौ-जसा सपरिख परिखण्डित-साध्वस ॥ ३१
अथ कपीन्द्र मुखं प्रययौ प्रभो-र्जिगमिषा तरलो नयनाञ्चल ।
हरिचमूश्च तदिङ्गित-वेदिनी हनुमता-नुमता-मभितो दिशम् ॥ ३२
वलवदस्थलयत् कपिवाहिनी पदविदीर्णधरा-प्रभवं रज ।
अपि विदूरतमा निजसपदा गिरिनदी नं नदीधितिलोपकृत् ॥ ३३
अचलदुन्मदवानरवाहिनी किलकिलायित पूरित दिङ् मुखम् ।
रघुपति प्रतिपन्थिगिरिच्छटा पविरथो विरथोऽपि रथिर्यथा ॥ ३४
धुत विमूलित - पादप-मानमत्-
　　　　कटकमाकुल सत्व - कदम्बकम् ।
विकृत विन्ध्यगिरि हरिवाहिनी
　　　　मृदित सादित सारसरिज्जलम् ॥ ३५
उपजगाम च सह्य मसह्यता कपिभरस्य वदन्तमिव प्रभु ।
कटकटायित सानु तटारवैश्चकित शङ्कित शंवर सैनिभै ॥ ३६

अथ फणीन्द्र - परागत सद्मनं मणिगुहागृह सुप्त-मृगाधिपम् ।
रघुबरोऽद्भुत - भीषण - सपदा-मलयमालयमाप चिरन्तनम् ।। ३७
स्फुटित शुक्तिमुखोच्छ्रितमौक्तिकं सुरवधू परिभुक्त लतागृहम् ।
अवततार तटं च पयोनिधे - र्ललित मीलितमालमहीरुहे' ।। ३८
त्रिजगती वलयस्थ नगक्षमे हरिमिव स्थित मा मनि केवले ।
अथ ददर्श जगत्पतिरप्पति मदमनो-दमनोचित दर्शनम् ।। ३९
प्रतरदुर्मत ..रज्मकेशरि - प्रखर - पाणिज-सजनित व्रणै ।
स भयमाहित वारि विगाहनं-सुरगजै रगजेत्र तनु-प्रभै ।। ४०
विहगराजि भुजङ्गम गोपनात् त्रिदशराजि महीधर पालनात् ।
स्व महिमैक पराजित विश्वता महितमाहित मान विपर्य्ययम् ।। ४१
विसृमरै परित' सरिता रयै र्वेलवता-चलयानल-तेजसा ।
अपि मनागनुपाहित विक्रियं समतयामतया किमु निर्वृत्तिम् ।। ४२
समुदितस्य सुतस्य पयोनिधे प्रणय-वर्द्धितया परिरीप्सया ।
कर विसारणवत् किमु विभ्रतं-घनतरं न तरङ्ग विजृम्भितम् ।। ४३
उदधि - दर्शन-विस्मय-निश्चल सकल एव चमूनयकोत्कर ।
पवनजन्मनि सादरमापतत् घन तमोन्नत मोहदकर्मणि ।। ४४
पश्यतोऽपि रघुनायकस्य तं न व्यहीयत तथा गभीरता ।
विस्मयानुगत बानरेश्वरा सा चमू रजनि तुङ्ग भीरता ।। ४५
अथ वारिराशिमवलोक्य भयदवपुषं वरूथिनी ।
इत्थमकलयदपेत रसातरसा विलङ्घन - विधौ स्व-चेतसा ।। ४६
घनाघनानामभिपूरणाय घना घनाशाय च दक्ष एष ।
सुरासुर - प्रोन्मथितस्य चास्य-सुरासुरत्ना मृतदायि पाथः ।। ४७
शुक्ति संपुट वितीर्णमौक्तिका मुक्तिकाम जन सेचनोचिता ।
वह्निनाक्षय - विधान वेधसाऽ - वेधसातनुरमुष्यमुष्यते ।। ४८
अत्रि शत्रु विहगेन्द्र निर्भयाः क्ष्माभृत. फणभृतश्च लक्ष्मण ।
अत्र सन्ति मणिमण्डलानि च ज्योतिरञ्जित जगन्ति सततम् ।। ४९

यो त्रजिणं ह्रपयते गृहीत नगाहितारम्भ-वितानमोघ.।
तं चेतसाऽपि ध्रुवमस्य कोव - नगाहितारम्भ-वितानमोघ ॥ ५०
त्राणाय दिव्यौषधमस्य वारि- स्वरूप सर्गे-वसुधा धराणाम्।
अत्राप्सरोभिर्वुबुधे स्फुरन्ती स्वरूप सर्गे-वसुधा धराणाम्॥ ५१
इह मुनिगण पीयमानस्फुरत् - महिमकर विलङ्घनाया सकृत्।
वितरति भयमन्तरे पाथसा महिमकर विलङ्घनाया सकृत्॥ ५२
अस्य मन्थमधिमादि पूरुषो मन्दराग मनसाधनो दधौ।
दृश्यते न लहरीह देहिना - मन्दराग मनसाधनोदधौ॥ ५३
अस्मिन्नास्ते सन्तति कापिरागा-
दम्भोलीना माहितायादसीया।
चित्र धत्ते भूभृता श्री रविघ्न-
दम्भोलीना माहिता यादसीया॥ ५४
पवित्रास - भाजायते सज्जनाना-
महीभृत्कुलेनेह संसेव्यमाने।
पवित्रा सभा जायते सज्जनाना-
मनुस्मर्य्यमाणेऽपि नाथेन दीनाम्॥ ५५
वलवानल घोर संनिवेशो - गुरुपातालतलं विगाहतेऽसौ।
वलवानल घोर संनिवेशो ध्रुवमेतद्वपुरुत्तरीतुमस्य॥ ५६
शेते पुमानिह परो न भुजङ्गतल्पे—
कल्पान्तरङ्ग - कलना-दवितान-कान्तः।
आश्लिष्य पद्मनिलया मचिराशुवल्ली-
कल्पान्तरंग कलना दवितान कान्त'॥ ५७

इति श्री मार्कण्डेयदेवविरचिते दशग्रीववधे महाकाव्ये
समुद्र-विलोडन नाम सप्तदश सर्ग ॥

# अथाष्टादशः सर्गः

इत्थमब्धिमहिमाद्भुतमग्न साध्वसेन कपय स्तिमितास्ते ।
धैर्य्यमेव न परं निरमुञ्चन् किन्तु ता प्रकृति-चञ्चलता च ॥ १
शर्वरीव तमसा परिभूता सा चमू विमलता - मुपनिन्ये ।
द्राड्मरीचिभिरिवोक्ति - विशेषै-रिन्दुनेव तरणे-स्तनयेन ॥ २
मोहरात्रिविगमे प्लवगाना धामसंह्रुन विषाद तमिस्र ।
पूर्व पर्वत इवा-मृतरश्मि प्रादुरास मनसि व्यवसाय ॥ ३
भूधरानिववृहद्भुज - शृङ्गान् बाल आतप इवोच्छ्रितराग ।
आलिलिङ्ग निखिलान् कपिवीरान् एक एव गमनाध्यवसाय. ॥ ४
आदुधाव सविधस्थितमद्रि - बामवाहुशिखरेण सुषेण ।
सेतुवन्ध रचनाय हरिष्यन् ज्ञातुकाम इव तद्युतिमानम् ॥ ५
गो समूहमवलोक्य पयोधे - राग वर्द्धित तदारयियास ।
उन्मदं जलदनाद - गभीरं नामतुल्य मृषभो विचिचेष्ट ॥ ६
लोकपालनिवहस्तु तमुच्चै रावणीयमदगन्ध ममृष्यन् ।
स्फारयन् करमुदग्रमदूरा - दाससाद कुमुद· कुमुदत्त्वम् ॥ ७
लोचने निदधता प्रतिलङ्कं - यद्व्यमूलि विटपी द्विविदेन ।
सूत्रमेव विदधे किमुसद्य - स्तन्निशाचर पुरोदसनाय ॥ ८
आनिनाय कपिश - प्रतिभासं - युद्धरागजनितो-दरहास· ।
ऐन्द्र-मैन्दव-मयूख-समूह - स्पृष्टधातुमय - शैल - विलासान् ॥ ९
रोष रञ्जितरुची नयने स्वे सैन्धवे पयसि यत्प्रतिपाय ।
तेन वाडवयुगं किमु नील - संततान जलधि विदिधक्षु· ॥ १०
सुप्रभञ्जन - मवाप्यसहायं वैरवृन्द - विपिन - क्षयवीजम् ।
स्वार्चिषा प्रहरदीपित - काष्ठं व्यातनोदनिलता नल उच्चै ॥ ११

पूरयन् गिरिदरी प्रतिनादै - र्वद्धयल्लवणवारिधि-वीचि ।
पाणिना भरभुजं भुजगेन्द्रं क्ष्मातलं च शरभ प्रजहार ॥ १२
मूर्च्छिता सपदि रोपमहिम्ना-सौम्य मूर्त्तिरपि वालि तनूज ।
आतपेन मिलित स्तपभानो सूर्य्यकान्त शिखरीव-दिदीपे ॥ १३
वाहिनी - जलकल - श्रवणेन-त्रस्यतोऽनुपयसा मधिपस्य ।
रामचन्द्रचरणौ ययुरार्त्ता कि तरङ्ग - कपटात् करदण्डा ॥ १४
द्रागवेष्टित चमूरणराग - स्तापनिर्द्धृ ति विशेषमवाप ।
को हि किकरजनव्यवसाये कर्म्मणि स्वयमपोहति धैर्य्यम् ॥ १५
वल्गतामपि पुर. प्लवगाना भेजिवान् विनयमेव हनूमान् ।
चारुतापितयशा अवदानैश्चापलं न खलु काक्षति धीर' ॥ १६
एव मुद्धर मुदापि वलेन प्राप लक्ष्मण मनो न विशेषम् ।
तस्य नायमखिलोऽपि भरो हि-स्वस्य वीर्यभुजयो श्च यथेष्ट ॥ १७
वल्गतो रघुपति प्लवगेन्द्रान् धूतपाणिकमलो विनिवार्य्य ।
आत्मनो धनुषि काक्षति सिद्धि-र्व्याजहार गिरमर्थ समर्थाम् ॥ १८
नैवमुद्धरतया कपिवीरा - लङ्घनीय मनघं स्थिति - वर्त्म ।
औचिती मनुसरन् हि मनस्वी सिद्धये निजवलेन समर्थ ॥ १९
वर्द्धितोऽपि वलिभि पवमानै प्रार्थयेत न हठाज्जलमग्नि ।
सोऽपि तं निरवशेषयितु स्यात्-पात्र संक्रमित दु सह दीप्ति ॥ २०
तावदस्तु शिथिलैव मुहूर्त्त - तत् प्रसह्य विलिलंघयिष्याव ।
यावदेष वचनान्मम सद्यो वर्त्म दर्शयति व. सरिदीश ॥ २१
याचितोऽपि न मया यदिमोघं मोक्षते निजगभीरिमगर्वम् ।
द्रक्ष्यथैव-मचिरात् स्थलभूत मामकीन विशिख-व्ययितापम् ॥ २२
एतदस्य वचनं नयसारं सारवित् कमल - सम्भव-सूनु ।
श्रावयन्नवहिता' कपिसेना' प्रीति - मेदुरमना मुहुरस्तौत् ॥ २३
कृत्यसारमधिगत्य यथावत् यावदास्त समितिःस्तिमिता सा ।
तावदेव ददृशे दिवि दूरादभ्रजालमिव कौणप - सैन्यम् ॥ २४

यानवेग-मरुदुद्धतवास - स्ताडिताम्बु दिवि मुक्त विहाय ।
तद्विलोक्य वलमापतदारा - दुच्चचाल कुपित कपिलोक ॥ २५
तत्र मारुति रवेक्षित - शील-सन्निवर्त्तित - चमूरण-राग ।
पर्य्युपाहृत - विभीषण मग्रे स्वामिन परमिवेष्ट मुदन्तम् ॥ २६
तस्यपाद-विनतस्य शिरो यत् पाणिना प्रभुरसावुदनैषीत् ।
तद् वभूव परमोन्नतमेकं रक्षसा विपुल एव कुलेऽपि ॥ २७
तन्निवेदित निज - व्यवसायं प्रत्ययं हनूमताभ्युपनीत. ।
सस्वजे सुनिविडं रविसूनु-र्वक्षसा मृदित - कौसुमदाम्ना ॥ २८
तत् पदाम्बुज नखद्युतिसंगात्-प्रागवाप्त - नवरत्न - किरीट ।
राघवेण रजनीचर - राज्ये-सोऽभ्यसेचि वचनामृतपूरै ॥ २९
लब्ध राघव - रुष पितुरब्धे - रङ्कदेशमपहाय भियेव ।
तारकावलिसखोऽथ विदूरादारुरोह वियदङ्गणमिन्दु ॥ ३०
रावणस्य भुवनत्रय-भर्त्तु· सूचयन् न चिरमेव विनाशम् ।
उन्ममज्ज सहसाम्बुधिमूलात् पद्मराग - कलश किमु चन्द्र. ॥ ३१
पूर्वमम्बर - विभागमचुम्बत् - यावदिन्दु - रसमग्र - मयूख ।
ऊर्जितं रतिपते-र्भुजवीर्य्यं व्याप तावदखिलानि जगन्ति ॥ ३२
व्यानसे भुवन - मण्डलमिन्दु सर्वमेव किरणै रमृतार्द्रै ।
आस्तथापि न शशाम रघूणा-नायकस्य विरहज्वरताप ॥ ३३
सर्वतो विसृमरै· शशिपादै - र्व्यस्तमन्धतमसं शरणार्थी ।
तं द्विषन्ति नियतं प्रतिपेदे-विप्रयोग - विधुराणि मनासि ॥ ३४
आत्मजे शशिनि जातसमृद्धा-वुल्ललास जलधीर-सदुर्मि ।
आत्मनो न बुवुधे वधमस्मत्-कोपनीकृतरघूद्वहचित्तात् ॥ ३५
राघवोऽपि शशिलाञ्छन -पादै - र्मुर्मुरैरविचिरं परितप्त· ।
इत्यवोच दभिशङ्कित - कान्ता मङ्गलेतरमधीर इवेन्दुम् ॥ ३६
यज्वराज भगवन्नमृताशो किं मुधा वितपसे निजभास ।
विप्रयुक्त वधपातक दीक्षा-युज्यते यदि विचिन्तय सम्यक् ॥ ३७

मा कदर्थय जहि द्रुतमस्त्रं राम एष चिरमस्तु वलिस्ते।
प्रार्थये न कुरु दुर्नय मिन्दो खिन्न चेतसि वलादवलायाम् ॥ ३८
काममिन्दु रभिहर्त्तुन दूये तेन नाहमसुलोभ कदर्य्य ।
प्रेयसी हरण - वैरिणि तस्मिन् हामुना विघटित प्रतिकारः ॥ ३९
आ किमेवमकृत प्रतिवाक्य-स्तापमेव विदधासि विशेषात् ।
एणलाञ्छन न मुञ्चति सत्यं कालकूट सहजत्व-गुणास्त्वाम् ॥ ४०
यच्चकोर-परिषत्-प्रतिवारं-भुङ्क्त एव रसवत् विषवह्नि ।
नून मभ्यसनमेव तदिन्दो-त्वद्रुचो रसयितु भृशतीव्रा ॥ ४१
जातमेव मृगलाञ्छन सत्यं त्वा मुमोच हरभालदृशोऽब्धि.।
त्वं पुनर्विरहिसपद - भाग्यै - सुस्थ एव पतितोऽसि जटासु ॥ ४२
लोकभीषणमसूत पयोधि-स्त्वा विषञ्च मृगलाञ्छन सत्यम् ।
वञ्चितोऽमृत मयूखधिया त्वा-नाखिनत् पशुपति दुरितैर्न ॥ ४३
उत्सृजन्नवश एव भवन्तं साधु मन्थनमवोधि पयोधि ।
त्वत्कला परिचितो-हरमूर्द्धाऽ सूयते सगरलाय गलाय ॥ ४४
इत्थमेव स वदन्ननु वारं सान्द्रवाष्पलहरीतर-दास्य ।
ता निनाय रजनीं परिवृत्ति - र्व्यस्ततल्पमसकृत् परिखिन्न ॥ ४५
वासवी-मथदिशं प्रतिपेदे स्निग्धकोकनद-कोमल-कान्ति ।
भानुमानुदधिमाशु दिधक्षो -शोणिमा च नयनं रघुसूनो ॥ ४६
सावहेलमिव तेन विमुक्त सायकश्च विददार पयोधे ।
अप्यलब्ध - मथन-व्यसनानि क्रोडराज पदविन्द सनानि ॥ ४७
निर्ववानिव विभावसु-रौर्व पर्वता पविनिपातमिवेषु ।
तार्क्ष्यत. क्षतिरकाक्षत नागै-रामवाण-दहन-स्पृशि सिन्धौ ॥ ४८
यावदम्बु परि - मूर्च्छितसत्वं धूममेव मुहुरुद्वमतिस्म ।
तावदेव तदपास्य पयोधि-मूर्त्तिमानुपययौ रघुनाथम् ॥ ४९
गङ्गया यमुनया च समूर्त्या सादरं विहितदोरवलम्बः ।
दर्शयन्नधिक - विक्लवमङ्गं वाणदग्धमथनव्रण - मर्म ॥ ५०

दूरतोऽपि तमवेक्ष्य रघूणां नायक. करुणया तरलोऽभूत् ।
अप्यरात्रिषु कृत खलु खेद साधुमार्द्रयति किन्वितरेषु ॥ ५१
तस्य पाद - संविधे प्रणिपत्य-प्लोषखेद-विधुरै क्षणमङ्गै ।
सजगाद पयसा पतिरित्थं तत् करार्पण - तुषारितमूर्त्ति ॥ ५२
इन्दुमिन्द्र तरुणार्मणिभेदान्–वारिजात - निलया-ममतं वा ।
पूर्वमीश भवतैव ममन्थे-संप्रतीव न तु धैर्य्य - विशेषम् ॥ ५३
कृष्ण एव दहन. पवमानोऽ - चाक्षुष स्थिरतरा च धरित्री ।
व्योम सतत मगाधतमोहं लोकनाथ ! भवतैव न सृष्ट ॥ ५४
तत् कथं निजनिदेश पर मा दग्धुमेकपद एव रसस्ते ।
न्यास एव खलु विश्वसृजस्ते - नर्भरो मयि गभीरिमगव ॥ ५५
लंघ्यताऽपिह मम स्पृहणीया तत्र नाथ भवत. स्वरसश्चेत् ।
केवलं गुरुभयान्नग-नागा-नाश्रिता ननु विमुह्यति चेत ॥ ५६
रोचते यदि च ते जगदीश यायता नलय-साधन मम्भ ।
अस्तु सोऽन्तरिह वानर-वीर-स्वैरकेलि दलितै गिरिजालै ॥ ५७

तं तथेति विससर्ज स यावत्-
विश्वबन्धुरनुवन्दित - भक्तिम् ।
तावदेव ददृशे कपिसैन्यै-
रर्द्धनिर्मित - उदन्वति सेतु ॥ ५८

शैलाभिघातरभसोच्छलित पयोधि
क्रोशन्निव स्वलहरी ध्वनितेन गात्रम् ।
आसेदिवान् रघुवरस्य दृशो पदत्वं
नि सामभक्ति सुलभश्चलता मृगाणाम् ॥ ५९

रामं ततो निशिचराधिपतिर्बभाषे
तत् पादपद्म-विनिवेश-पवित्रितांस ।
संदर्शयन् करतलेन वचोतिशायि
शौटीर्य्यवर्त्म विषमं कपिकुञ्जराणाम् ॥ ६०

स्वेदोदविन्दु - दरदन्तुर भालमूलै-
विक्रम्य हस्तबदरीकृत - शैल-जालै. ।
स्वामिन् विलोकय तवानुचरै कपीन्द्रै -
स्तोकावशेषित मुदन्वति सेतुबन्धम् ॥ ६१

एतेषु वानर-भटेषु करान्तरिङ्ग-
दुत्तुङ्ग-शैल नित्रहेषु चलत्सु विष्वक् ।
आसन्न भङ्ग भय-कम्पित-मानसोऽयं-
भासा पतिर्विनुदते रथमूर्द्ध्वमूर्द्ध्वम् ॥ ६२

भूभृद्विमूलन-विनिद्र-मृगेन्द्र-नादै-
रुत्कर्ण्णता कलयतेऽभ्रमुवल्लभस्य ।
अद्य क्षण न विरमन्ति मदेन सार्द्धं-
मन्दाकिनी पयसि मज्जन-कौतुकानि ॥ ६३

एते कपीन्द्र-करकोटर मुच्यमानै-
रुच्चावचै क्षितिधरै. परित. पतद्भि ।
चूर्णीभवन्ति जलधे शरदिन्दु गौरा
शंखा गभीर यशस स्तरुवीजकल्पा ॥ ६४

उत्क्षिप्यमाण - गिरिमूल - महाविलेषु-
केचिद्विशन्ति जलधे पयसा प्रवारा. ।
अन्येषु न श्रलुकयन्ति दिवं जवेन-
शैलैरुपर्य्युपरिपातिभिरुच्छलन्त ॥ ६५

उन्मूलनो-न्मृदित-बज्रहति व्रणाना-
माक्रोशता विकलसत्व-सहस्र-नादै ।
संसक्त-धातुरजसा सरिता छलेन-
रक्तच्छटा इव पतन्ति महीधराणाम् ॥ ६६

ग्रासार्थिभिर्जलचरै र्भयमापिताना-
माश्वासनार्थमिव धूत-तरङ्गहस्त ।
स्थानप्रदः क्षितिभृतामयमात्मजाः कि-
मुत्कोच माहरति वारिनिधि स्रवन्ती ॥ ६७

एतन्मुहुर्लवण – वीचिभिराहतान्तं-
सिह द्विपं पतित-भूधर-विप्रकीर्णम् ।
मन्दं धयत् सुमधुरं नगनिम्नगाम्भ -
स्वैरं निवेशयति मीनमुखेन सिन्धु ॥ ६८

दूरादवेक्ष्य कलकुञ्जरमुन्मदिष्णु-
मापातुकान् गिरिगुहा-प्रभवान् मृगेन्द्रान् ।
कोपादिव क्षिपति निष्ठुरमुर्मि-हस्तै-
स्ता स्वेव भूधर-दरीषु महार्णवोऽयम् ॥ ६९

एते तुरङ्ग रिपव सुखमुत्प्लवन्तो-
स्वादोत्तरं लवणमम्बु मुहुर्लिहन्त· ।
मातङ्ग नक्रकुल बालधि चापलाना–
दिङ्नाग जीवितमुषा ललिता-नभिज्ञा ॥ ७०

स्थान स्थितोऽपि मलयो मुखमेव सेतो-
रासीदयं च पटु निर्वहणं सुवेल ।
उन्मूलनो दसन सिन्धु निपात वाधा–
पात्राणि केवलममू गिरयोऽन्तरस्था ॥ ७१

इत्यस्य वाच मनुभूय दरस्मितास्य·
यावत्पदानि कतिचित् प्रचचाल राम ।
शैलायुधानि-शितदन्त–निपीडितोष्ठा-
स्तावत् पुरीं रुरुधिरे हरय. समन्तात् ॥ ७२

अथ रघुपति रम्भोराशिमुल्लंघ्य तत्तत् -
कपिवलमनुलङ्काद्वारमादिश्यरोद्धुम् ।
वसति मधि सुवेलं रोचयामास रम्या–
स्फटिक-दृषदि-कल्पक्ष्मारुहाणामधस्तात् ॥ ७३

इति श्री मार्कण्डेयदेवविरचिते दशग्रावधे महाकाव्ये
लङ्कावेष्टन नामाष्टादश सर्ग ॥

# अथोनविंशः सर्गः

शुश्रुवानपि समुद्रबन्धनं रोधनं च नगरस्य वानरैः ।
वञ्चितः सुरजयोद्भवैर्मदै र्हेलनं न विमुमोच रावणः ॥ १

उल्ललास बलवद् यथा यथा रामसैनिक-पराक्रम - क्रमः ।
रावणस्य ववृधे तथा तथा जानकी मनु मनोज-सज्वरः ॥ २

मन्दमारुत - मरन्द - बिन्दुना विव्यथे दवथु-माप चन्दनै ।
संस्मरेण जनकात्मजा कृते निर्भरं विहिम-मर्मवेदनः ॥ ३

जानकी हृदयबन्धनं भवन् वन्य-वृत्तिरपि तस्य राघवः ।
आनिनाय लघुता विमृश्यत-स्त्रिलोकविजयोर्जिता श्रियः ॥ ४

तामुपाय - निवहैरनारतै - रप्यहार्य्य-मनसं मनस्विनीम् ।
मायया रघुवरैक - जीवना-माशु मोहयितु माचकाक्ष सः ॥ ५

सादरं च निदिदेश राक्षसान् - क्षिप्रमेव विरचय्य मायया ।
राघवस्य हतमाहवे शिरो - दर्शयध्वमिह जानकीमिति ॥ ६

तैश्च निर्मितमदर्शि तत्क्षणं राघवस्य दरपीडिताधरम् ।
सावलम्बित-जटाभरं शिरः सव्यपाणिमपिचाप-चुम्बितम् ॥ ७

दर्शितेऽमुकुलयद् युगं दृशो कम्पमाप सविधं प्रसारिते ।
तत्र पत्युरिति कीर्त्तिते पुनः सा जगाम धरणी विचेतना ॥ ८

सा ततः कथमपि प्रयत्नत - श्चेतना त्रिजटयोपलम्भिता ।
आवृता युगपदापदा शतै - र्मोहमेव बुबुधे महोत्सवम् ॥ ९

तत्प्रभोः प्रकृतिसुन्दरं मुख - नातिमात्र - परिवृत्त-सौष्ठवम् ।
वीक्ष्य वीक्ष्य विनिमेष-लोचना पर्य्यदेवत कराहतस्तनी ॥ १०

यत् दिदृक्षु-रसहे दिवानिशं यातुधान - गृहवास-यातना ।
एतदीदृश मवेक्ष्य हा कथं न व्रजन्ति कठिना ममासवः ॥ ११

स्निग्ध चन्द्र शकल - द्युताविह ब्रूहि धातरलिकस्थलेकृत' ।
मत्कृते निशिचराधिमादितो हाधिगेतदशिव त्वमालिख ॥ १२
स त्रिलोक-परिरक्षणक्षम - श्चन्द्रकान्त-मणिदाम - पेशल· ।
हा कथ ममकृते दशामिमा सेवते तव सुलक्षण' कर· ॥ १३
कुत्र स त्वमतिविश्व - विक्रम· कुत्रवाय - महितस्तृणोपम ।
वेद्मिमा मनुचिरस्य खेदवानातनोरनवलम्बनं जगत् ॥ १४
राक्षसोचितमकारि रक्षसा - निर्मितं सुपुरुषोचितं त्वया ।
स्त्रीजनोचित मुदेति कि नमे हाधिगद्यमरणं चिरेप्सितम् ॥ १५
एवमादि वहुशो विलप्यसा तन्मुखं स्तनतटे वितेरुषी ।
वल्लरीव कुलिशेन ताडिता - निष्पपात गत-चेतना पुन· ॥ १६
स्वप्रयत्न - पुनराप्त - चेतना - मङ्कपालिमधिरोप्य सादरम् ।
उन्नमय्य मुखमश्रु - विक्लवं तामभाषत विभीषणानुजा ॥ १७
कि मुधा विदितभर्त्तु - विक्रमे मायया निशिचरस्य मुह्यसि ।
शंक्यते न खलु वामलोचने भास्करस्य भयमन्धकारत ॥ १८
दृश्यते न परिवृत्तमेकदा नऽ्यलीक – विधुरं जगत्त्रयम् ।
भीरु तर्कयसि केन हेतुना राघवस्य विमतात् पराभवम् ॥ १६
क सहेत भुवनत्रयेऽपि वा त्वत् प्रियस्य कुटिलं भ्रूवोर्लवम् ।
दूर एव शरपातसाहसं केयमात्म – मनसो विडम्बना ॥ २०
मा-वसीद वह मानसे धृति - नायमस्मि रघुनाथ-रोषभू ।
द्रक्ष्यसि त्वमचिरेण सुव्रते त्वद्दशामरिवधूषु सर्वथा ॥ २१
इत्यदो वचसि संनतभ्रूव – प्रीतराग परतत्र - संचर ।
सालसी मनुकपीन्द्रवाहिनी वलिगतैरपजगाल संशय' ॥ २२
तै प्लवङ्गमचमू मुखस्वनै - दूर - वर्द्धित - रुषो निशाचरा ।
संभ्रमादनभिपृष्ठवल्लभा' साधु युद्धमनु संप्रतस्थिरे ॥ २३
भावि युद्धमति किंचिदुत्तरं रावणोऽयमिति मीलितं पुन ।
नाति दूरमवलोक्य वानरान् व्योम-सीम्निचरितं विमानिभि ॥२४

सा पुरी कुपित - वानरच्छटा - लुप्यमान-कमनीय-गोपुरा ।
आविरास नयनोत्सव श्चिरा-दीषदाहितदृशा दिवौकसाम्॥ २५
यावदेव समनद्ध - रक्षसा - वाहिनी बहुविधं वधोन्मुखी ।
तावदेव नव-वेग - पेशल - स्तस्वरे सुरपति वराजन.॥ २६
आससाद वियदङ्गणं जवात् तत् प्रयाण-दलितक्षमारज ।
प्रेरितं प्रिय निवेदितेछया - लङ्कयेव निकटाय नाकिनीम्॥ २७
रेणुभि-र्गगन मुत्पतिष्णुभि-र्बिम्बमम्बरमणे स्तिरोदधे ।
वानरैश्च समराय सत्वरै रावणस्य भुजवीर्य्य-मूर्जितम्॥ २८
अन्धकारित - दिगन्तरे मुहु - र्विश्वमावृणति रेणुमण्डले ।
दूरमात्म-परबोध - निर्द्धना. साहसानि सुभटा वितेनिरे ॥ २९
प्राङ्नभ कियदुपेत्य निन्हुतै-युद्धवीक्षण मकाक्षि नाकिभि ।
आयुधा युधि विधौत - निर्भयै-स्तत्वरे कुसुम-वृष्टिसृष्टय.॥ ३०
सर्वतोऽपि रजसाऽन्धकारिते जघ्निरे बहुभटा परस्परम् ।
बाणवर्षण-भरेण राक्षसान् वानराश्च तरुशैलदुर्दिनै. ॥ ३१
योधिकण्ठ - रुधिरस्रवै क्रमा-द्रेणुसन्त ममभापमन्यताम् ।
भूय एव कपिरक्षसा पुन सान्द्रतामधित साहसोत्सव ॥ ३२
भ्रूविभङ्ग-विकटत्वमाननै - पाणिभि परिगृहीतमायुधम् ।
साहसैक - रसिकस्य तत्र किं तत्यजे दलित पातितैरपि ॥ ३३
दन्तपातमिव वल्लभार्पितं शस्त्रघातमविदुर्भटोद्भटा· ।
तत्कुचान्तर - निवेश - सन्निभं-वीरभूमि-शयनं च मेनिरे ॥ ३४
योजितै प्रतिभटस्य भेदने तीक्ष्णतातिशय-भावितात्मन ।
नन्ववर्त्ति कृतकृत्यता विना-सायकैश्च हृदयैश्च दोष्मताम्॥ ३५
रक्तमेव गलितं न साहसं गात्रमेव विभिदे न मानसम् ।
जीव एव मुमुचे न चायुधं-काऽपिहन्तविषमा भटस्थिति· ॥ ३६
यापुरा प्रतिदिनं कचग्रहै-स्तादृशैरपि न संमुखीकृता ।
राक्षस-समर सम्मुखाहतं सा स्वयं सुरवधू रुपस्थिता ॥ ३७

अम्बरे सुरवधूभि-रावृत-स्ताण्डवानि विदधान माहवे ।
वैरिणा दलित-मस्तक वपु· स्वं ददर्श कुतुकेन राक्षस ॥ ३८
एकमाहव विसृष्ट मर्च्चित नाकिना कुसुम - वृष्टिभिर्वपु ।
अन्यदम्बरतले धृतं पुना-राक्षस· सुरवधू - करस्रजा ॥ ३९
राक्षसेषु विकिरत्सु सायकान् दु·सहानमरनाथ-सेनया ।
कल्पिता. कपिकुलैरनाकुलै-रायुधानि फलकानि चाद्रयः ॥ ४०
वैरिवाण - जनित-व्रणःकपि· शोणितान्यवयवेषु विक्षरन् ।
धातुरेणु – कपिशा निजापगा धारयन्निव गिरि र्व्यराजत ॥ ४१
आपतनतिलघुं रथं रिपोर्विक्रमात् प्रहरणं वितेनिवान् ।
वानरस्तदपरं परं जवा-दाजघान सरथाश्वसारथिम् ॥ ४२
राक्षसेन परिणामित करी वानरस्य विकटामुरस्थलीम् ।
प्राप्य तद्भुज निपीडित.क्षणा-दाससाद पिशितैक–पिण्डनाम् ॥ ४३
यातुधान-विशिखेन ताडितः-प्रज्वलन् करतले धृतो गिरि· ।
सस्मितं विससृजे वनौकसा तस्य मूर्द्ध नि नितान्त मुच्छिख ॥ ४४
अश्वसादिन मुदग्ररंहसं दूरमुद्यत - निशातसायकम् ।
अग्रहस्त - विधृतेन भूभृता - चूर्णपेषमपिषत् प्लवंगम. ॥ ४५
वानर प्लुतविशेष-कोविदो राक्षसं स्खलित- सर्वसायकम् ।
स्वैरमेकपद उत्पतन् -जवात् प्राहरत् कुलिशदंष्ट्रिकुट्टन ॥ ४६
चक्षमे न खलु यन्निशाचर कर्त्तुमायुधशतैरपि ( द्रुतम् ) ।
विक्रमेण निगृहीत – कुन्तल - स्तच्चकार नखरै प्लवंगम· ॥ ४७
स्यन्दनान्तरपकृष्य राक्षस - संविभिदन्नखर दंष्ट्रसाधन ।
नेच्छतिस्म भुजयन्त्र–पीडितं प्रोषितासु मपिरोषण· कपि. ॥ ४८
वाण मा दधत एव कार्मुके - राक्षसस्य हृदि दत्त पत्तल· ।
पीडितस्य भुजयन्त्रतात्मनो वानरो विनिरमूलयद्भुजौ ॥ ४९
एवमत्र सुविचित्र - दारुणः प्रादुरास कपिरक्षसा रणः ।
अन्तकोऽपि किलयं विलोपयन् सद्य एव चकितायित ध्रुवम् ॥ ५०

वेष्टमान - गजहस्त - पन्नग संचरन् कुणपमत्स - कच्छपः ।
मग्नभिन्न करिकाय पर्वत· क्षेपणाचल सखेल दिग्गजः ॥ ५१
प्रेक्षदुद्भट - तरङ्ग - संतरत् स्यन्दन प्रकर - प्रोत संहति ।
रामरोष - वडवामुखानल - स्तत्र कोऽपि रुधिरार्णवोऽवभत् ॥ ५२
तद्बलं वलभिदापि दु·सहं सर्वमेव कपिभिस्तथाहतम् ।
श्लाघ्यमेकमिह दैवमाद्रिये - धिग्वृथैव वलपौरुषश्रम ॥ ५३
वल्गितै-र्विजयिना वनौकसा रोपणं सपदि राक्षसेश्वरम् ।
संभ्रमेण समराय वाहिनी - मादिशन्तमिति कश्चिदूचिवान् ॥ ५४
एवमाह समराय सत्वरो मन्मुखेन तव सूनुरिन्द्रजित् ।
तत् प्रयत्न शत वोधितेन ते तेन सार्द्धमनुजेन दोष्मता ॥ ५५
रामचन्द्र भुज-वीर्य्य पालितै - र्वानरैरखिलमेव नो वलम् ।
निश्चमूपति निरश्ववारण - स्यन्दन कृतमयोध सारथि ॥ ५६
क्वेदमस्मदुपलालितं वलं सा च कुत्र कपिकीट - संहति ।
अस्य नूनमनया पराभव पावकस्य शलभेन विग्रह ॥ ५७
दैव निर्मितमिदं विभावयन् मा वृथा रचय खेदमात्मनि ।
यावदेष परिकल्पयामि ते रामलक्ष्मणशिरोमयं वलिम् ॥ ५८
तन्निशम्य रजनीचरेश्वर सद्य एव परिवृत्तसौष्ठव ।
दीर्घमुष्णमसकृन्निरश्वसीत् दु सहा हि सुहृदा नवा विपत् ॥ ५९
तद्बलं जित सुरेन्द्र सैनिकं ते च मौलिसचिवा-स्तथाविधा· ।
ते नरान्तक - सुरान्तका - दयो देहजाश्च कथमेकदा हता· ॥ ६०
हन्त हन्त विषमा विधे क्रमा प्रायश कुटिलचेष्टिता· सुराः ।
रावणोऽस्मि यदि तद् भविष्यति व्यक्तमद्य भुवनत्रयक्षय ॥ ६१
इत्युदीर्य्य स ववन्ध धीरता-मात्मपौरुष महासहायवान् ।
तौ च वानर - वरुथिनीं जवात् वाणवर्षण भरेण वव्रत ॥ ६२
धावितं किपिभिरादितो जवान् - मध्यत कथमपि स्थितं रणे ।
अन्ततस्तु विनिमील्य लोचने पृष्ठलग्नविशिखै पलायितम् ॥ ६३

कोटिश प्लवगयूथनायकान् स्वायुधैकसुहृदौ निशाचरौ।
निन्दतु· समरसीम्नि दुर्दशा किन्नसाध्यमति वीर्य्यशालिनाम्॥ ६४
तत् प्लवङ्गमकुलं तथाकुलं शान्त्वयन् स्वयमरुन्ध दूरत ।
कुम्भकर्णमहिमाशु नन्दन - स्तं च वासवजितं विभीषण ॥ ६५
ते युगे युगपदिष्टसाहसे विक्रमान् हि विदत्तथा नवान्।
तन्मुखानि पृथगीक्षितु विधि सृष्टवानिव चतुर्मुखीं यथा ॥ ६६
तत्र ताप निरमोघसाहस - स्तेन संख्यभुवि मायया हृत ।
तस्य गूढमपहृत्य नासिका नाति - दूरमहसद्विडम्बयन्॥ ६७
राक्षस सपदिकोप मूर्च्छित-स्तर्जयन् स्मितमुखान् विमानिन ।
मूर्च्छयन् पदभरेण पन्नगान् स्वशरीरमशनै रवर्द्धयत्॥ ६८
तं विलोक्य वपुषैव रोदसी पूरयन्तमनिवार्य्य विक्रमम्।
कल्पसंक्षय इवाम्भसा निधिं धाम राम बडवानलोऽसृजत्॥ ६९
पूरयन् निजभरेण रोदसी तद्युगं युगपदा पतत्तदा।
राघवस्य धनुरुच्छ्रित शर· शात्रवस्य च तनूच्छ्रितं शिर·॥ ७०
कुम्भकर्णमवलोक्य पातितं रोषण सपदि रावणात्मज ।
आ ववार सहसा रघूद्वहौ वृद्धिमानिव नदीरयस्तटौ॥ ७१
स द्वयोरपि मुमोच सायका - नेक एव तमियेष संक्षते।
एक एष इति राघव पर - स्तर्कया प्रति चकार केवलम्॥ ७२
तेन सार्द्धमनयो क्रमादभू - द्विक्रमं प्रहरता तथा रण ।
तौ निरीक्ष्य चिरमक्षदुर्जयौ शिश्रिये स निजकैतवं यथा॥ ७३
मायया स विरचय्य जानकी - माजघान परिपश्यतोस्तयो ।
तद्विलोकन विमूढचेतसो - तौ ववन्ध च भुजङ्ग - रज्जुभि ॥ ७४
राघवौ भुजगपाशवेष्टितौ पश्यता मसकृदाकुलाकुलौ।
ईषदंकुरित एव नाकिना भाग भञ्यत मनोरथ - द्रुम ॥ ७५
वीक्ष्य वाष्पवदनं विभीषणं विव्यथे सपदि राघवो यथा।
नागपाश-वलयेन सर्वत - स्तेन वेष्टितवताऽपि किं तथा॥ ७६

संस्मृतोपगत एव तत्क्षण तौ प्रणम्य भुजगेन्द्र-भोजनः ।
नागपाशवलयं न केवल रक्षसो धृतिमपि व्यखण्डयत् ॥ ७७
शृण्वत स्तनय-कर्म सादरं सद्य एव हृत - सर्वपौरुष ।
श्रोत्र शुक्तिषु पपात रक्षसो रामलक्ष्मण - धनुर्गुणध्वनिः ॥ ७८
रावणि पुनरतीव रोषणो लक्ष्मण शरभरैर्निरङ्कुशै. ।
आससाद शनकै विषाविलै र्वैनतेयमिव पन्नगेश्वर. ॥ ७९
लक्ष्मणोऽपि विनिवारयन् वभौ दु सहं विशिख दुर्दिनं रिपो ।
दुर्निमित्तपिशुन घनाघन सुप्रयुक्त इव शान्तिको विधि ॥ ८०
शस्त्रमस्त्रमखिलं पयुज्य स प्रान्तत. किमपि खेदवानिव ।
ब्राह्म्यमन्त्र महितेन पत्रिणा मेघनाद मसुभिर्व्यमोचयत् ॥ ८१
सौमित्रे र्विशिखेन वीरशयने निद्रापितं रावणिं ।
संपश्यन् मघवा चिरेण सफलं मेने सहस्रं दृशाम् ।
विंशत्या श्रवणै. पुनर्दशमुख. शृण्वंस्तथा दारुणं ।
तद्दु खं बुभुजे शठेन दशधा धात्रेव सवर्द्धितम् ॥ ८२

इति श्री मार्कण्डेयदेव विरचिते दशग्रीववधे महाकाव्ये
इन्द्रजिद्वधो नामोनविंशतितम सर्ग. ॥

# अथ विंशः सर्गः

अथ निर्जगाम समराय सरोषै-
ज्र्वलयन्निवाखिल जगन्ति कटाक्षै ।
दशकन्धर श्चरणभारनमद्भू-
धरभुग्न भोगधर भूपति-मौलि ॥ १
अधिरोहणोद्यत मधीर विकूजन्-
मणि किङ्किणी कलकल-व्यतिमिश्रै ।
प्रतिकूल मारुत-विधूत-पताका-
पटपल्लवै. प्रतिषिषेध रथस्तम् ॥ २
विनतै शिरोभिरवगैश्चपदै - र्गलदश्रुभिश्च नयनै रसकृत् ।
किमभर्त्सयन् रथ (धु) पुरीणखगा-नपरे खग खररुत पुरत ॥ ३
अगमन् प्रदक्षिणममुं च शिवा मिहिरोन्मुखा मुहुरुदीर्णरवा' ।
दिनकृत् कुलप्रभव एष वधं तव दास्यतीति निगदन्त इव ॥ ४
हतवान्धवस्य पिशिताशनभर्त्तु-र्वयमेव संप्रति भवाम सपक्षा ।
सुतमासदान पणितैरितिगृध्रै -स निवद्ध मण्डलशतै रनुजग्मे ॥ ५
अवलोक्य तं च समराय चलन्तं
पुरसुभ्रुवा वदति क परखेदान् ।
अपि सद्मभित्ति निहिताभि रमन्दं-
यदरोदकाञ्चनशिलाप्रतिमाभि ॥ ६
रथमूद्र्ध्नि धूतो निशाचरस्य ध्वजदण्डो निपपात दुर्निमित्तम् ।
अचिरेण विभोर्विभाव्य मृत्युं वलवत्या किमु मूर्च्छया गृहीत ॥७
समराय विनिर्गते दशास्ये शिथिलीभावित मेघनादशोका ।
कुशल करपद्म-ककणाना कुलदेवी र्महिषी पर ययाचे ॥ ८

वाष्पव्याकुलया दृशा प्रतिहतच्छायेन वक्त्रेन्दुना-
याचन्तीं करकङ्कणै रविरहं ता वीरपत्नीं तदा।
पश्यन्त्या कुलदेवता प्रतिमया पाषाण मय्याप्यति-
स्थूलै-रश्रुभि-रर्पिता स्तनतटे नि सूत्र मुक्तावली ॥ ९

अवलोक्य परस्परं विदूरा-दवदानानि परस्परस्य तानि।
परिचित्य कृतार्थताभि मेने भुजवीर्य्यस्य नृपेण रक्षसी च ॥ १०

अदूरत. सानुज एव राघवे स्थितेऽपि नि:शेष निशाचरान्तिके।
विभीषणं हन्तुमियेष रावण सुहृद्‌विरोधो हि महानरुंतुदः ॥ ११

परिहीन विवर्द्धमान धाम्नो रघुनाथस्य विधेरिव प्रभावात्।
सुचिरं सम विक्रमाभिरामं समरं राक्षसवीरयोर्बभूव ॥ १२

कोपाटोपा दनुजे यावदुग्रा शक्ति मोक्तुं चक्षमे राक्षसेन्द्रः।
तावद्भावं रामचन्द्रस्य जान - स्तं सौमित्रि स्तरसैवाभिपेदे ॥ १३

जातातङ्कै. कथमपि दिवि प्रेख्यतां व्योमसद्भि-
स्तस्मै क्रोधादथ दशमुखः शक्तिमारान्मुमोच।
ज्वालाजालग्लपितजगताप्येतयाभिन्नवक्षा-
वाष्पाम्भोभि· सह रघुपतेः सोऽपि भूमौ पपात ॥ १४

रामनुजोऽपि पवमानसुतोपनीत-
द्रोणाब्धि-लब्ध-परमोषधि-लाभसुस्थः।
भूयः क्षपाचरवधाय जवादुदस्थात्-
सार्द्धं प्रमोदपुलकेन रघूद्वहस्य ॥ १५

तं यावदाशु विनिषिध्य पदातिरेव
राम. स्वयं रथिन माह्वयते द्विषन्तम्।
तावन् महेन्द्र-परमादरनुद्यमानः
प्राप्तो रथोम्बरतलात् परिविम्ब्यमानः ॥ १६

संतानक - प्रसब - सौरभ - संभृतेन
संभोग - खिन्नसुरयौवतलाञ्छितेन।
मन्दाकिनी लहरि शीतल शीतलेन
मन्दानिलेन मृदुधूत महापताकम् ॥ १७

दानार्द्र मिन्द्रगजगण्डतलं विहाय
मन्दाकिनी कनक पद्मवनं च दूरात्।
आपान्तकै र्मधुकरै रुपसेव्यमान
पर्य्यन्त - तोरणित-नन्दन-पुष्पमालम् ॥ १८

अभ्युन्नतोज्वल बिघट्टित चन्द्रविम्ब-
श्चोतत्तुषार विसरै रुपजात जाड्यान्।
मार्त्तण्डमण्डल सकाश विकाशमानै
स्वैरं धुरं धरहरीन ग्लपयन्तमुष्णैः॥ १९

अग्रे निरीक्ष्य हरितः प्रतिपन्नहेष-
मुत्तम्भित - श्रुतिभिरश्चित केसराग्रै.।
उद्वलगदग्र-चरणाञ्चल - चापलेन
भिन्नाम्बुवाहपटल हरिभि. स्वधूर्य्यै. ॥ २०

बैमानिकै र्दिवि पुरन्दर निर्विशेष -
दूराद्विमुक्त - निजवर्त्मभिरर्च्यमानम्।
सक्रोध रावण-कटाक्ष-निरीक्षितेषु
जातावहेल - सुरसारथिनुन्नधूर्य्यम् ॥ २१

अग्रेऽवतीर्य्य गगनादुपतिष्ठमानं
पौरन्दरं रथमवेक्ष्य रघुप्रवीर।
तै स्तर्निजैर्गुणगणैः परिमोदितस्य
साक्षादिव प्रणयमागतमस्य मेने ॥ २२

हु कुर्वतोऽपि वदनैर्दशकन्दरस्य
देवैर्मुहु र्जय जयेति विवर्द्धमानः ।
राम प्रसाद इति वन्दन पूर्वमैने
अध्यास्त मातलिकराब्जकृतावलम्ब. ॥ २३

ऐन्द्रं तत. कवचमामुचदिन्द्रसूत्र-
हस्तोपनीतमवनीतलशीतरश्मिः ।
य प्राप्य द्दप्तमनसा दनुजेश्वराणा
शीर्य्यन्ति दूरमिषवश्च मनोरथाश्च ॥ २४

अन्योऽन्यस्य कुलस्य यत् समुचितं संभावनायाश्च यत्.
यद्वीर्य्यस्य यशोभरस्य च समं यच्चास्त्रविद्याविधेः ।
यद्ब रस्य च ताद्दशस्य सद्दशं कान्तानुरागस्य वा
प्रारेभे चलमान दैवतगणं तत्कर्म ताभ्या रणे ॥ २५

निचखान शरं निशाचरेन्द्रो
भुजदण्डे रघुनायकस्य कोपात् ।
व्यथयान्त···दुत्थया समन्तात्-
त्रिदशाना हृदय पराबभूवे ॥ २६

उत्थाय द्विगुणरुषा स एव बाणो
रामेण स्वधनुषि संप्रयुज्यमान. ।
तद्वक्ष. सपदि विभिद्य लज्जयेव
प्रावीक्षत् भुवमवदार्य्य नागलोकम् ॥ २७

व्यतिहारतो विहित विक्रम क्रमौ-
नरयातुधान-सुभटौ निरीक्षणौ ।
विजय-श्रिया किमपि सन्दिहानया-
श्रितदोलयेव विदधे गतागतम् ॥ २८

अति निर्दयं प्रहरतोः शिलीमुखै-
रितरेतरं विजयसंशये तयो. ।
रघुनाथ मात्र विनिवेदिताशिष-
स्त्रिदिवौकसः किमपि संशयं ययुः ॥ २६

तेनैकेन निशाचरेण युयुधे सार्द्धं स एकः परं
श्रीरामो विपुले वलेऽपि नियतं स्वं क्षात्रधर्म्मं स्मरन् ।
दैवात् केवलतां गतोऽपि स पुनस्तस्मिन् क्षणे राक्षसो
विंशत्या युगपद् भुजैर्दशमहावीरा इव प्राहरत् ॥ ३०

कामं तथा समर सीमनि सायकाना-
रामोऽपि तत् किमपि दुर्दिनमाततान ।
आदान योजन विसर्जन संभ्रमेषु
पर्य्याय विंशतिभुजोऽपि यथा न शत्रुः ॥ ३१

अनितरसुलभै स्तथा विधानै
र्भुज ललितैरितरेतरस्य तै स्तैः ।
अजनि सुभटयो स्तयोश्चिराय
स्वबल - पराक्रमवेदिनोः प्रमोदः ॥ ३२

चितामयः शङ्कु - शतेन रावण-
स्ततः शतघ्नीं प्रजिघाय राघवे ।
गदा मदान्धो दिविषद्भयङ्करं
पुरा पुराणां दमने यथान्धकः ॥ ३३

रघुपतिरपि ता चकर्त्त सद्य -
स्तुहिन कराद्धंमुखैः शरैर्निशातै. ।
अभिमुख - पतयालुमर्थसिद्धिं
विधिरिव दुर्ल्ललितैरपुण्यवृत्तेः ॥ ३४

सायकान् निशिचरेण पातितान्
राघवः प्रतिचकार लीलया ।
राक्षसस्तु दलिता अपि क्षणात् -
कन्धरा नवनवं समुद्गताः ॥ ३५

खण्डितासु फलिता स्तत पुनः प्रोद्गतासु पुनरेव खण्डिताः ।
कन्धरासु रजनीचरप्रभोः सद्य एव दिविषन्मनोरथाः ॥ ३६

इत्थं रामस्तेन समं कंचन काल
कारं कारं तत्र विहारं रणरङ्गे ।
अस्त्रं ब्राह्मयं जिह्मगराजायत वाहु-
श्चापे कोपे नाविलचेता-इव चक्रे ॥ ३७

मन्त्रेण युक्तेन च तेन दुरात् शिरासि शत्रोर्दशपातितानि ।
विरेजिरे दिक्षु दिगीश्वराणा प्रवेशहेतोरिव भद्रकुम्भाः ॥ ३८

अथ परिपतितान्यपि क्षितौ दशवदनस्य शिरांसि पश्यताम् ।
पुनरुदय विशंकया कुलं क्षणमभवत्त्रिदिवौकसा मनः ॥ ३९

अथ जय जय रघवेति प्रज्वलद्भिरानन्दितैः-
शिरसि रघुपतेः सुरैरर्पिता दिव्यपुष्पावली ।
रजनिचरपतेस्तुता दृग् जटायुर्वधक्रोधतः
किमु कटु रटता मुदश्रीर्नख श्रेणिका ॥ ४०

अवदत् भयमिन्द्र - लोचनाना-
विकट नट भ्रूकुटीनि यानि पूर्वम् ।
स इषि रघुपतेर्नखैर्व्यलिम्पन
दशवदनस्य मुखानि तानि गृध्राः ॥ ४१

अथामोद मेदस्विभिः ( नैः ) सिद्धसंघै-
र्दिवि प्रस्तुता दुन्दुभीना निनादाः ।
सगर्वं च गन्धर्वगाथाः प्रवृत्ताः
स्व - नृत्यप्रयोगं दधु स्वर्गयोषाः ॥ ४२

तस्मिन् क्षणे रघुपतिस्त्वरमाण एव
लङ्कापतिश्रियमदत्त विभीषणाय ।
आसीत् प्रणाम -दिवसात् प्रभृति प्रवृद्ध-
स्तस्य प्रतिश्रवमय स महान् वभार ॥ ४३

सरथमथ विसृज्य मातलि सुरपतये प्रणिपातमर्पयन् ।
सुर मुनि जन क्लृप्तमङ्गल प्रभुरुपगन्तुमियेष वल्लभाम् ॥ ४४

निस्तीर्णयो कथमिवापदमप्रसह्या
सद्यस्तयोः प्रतियतोर्नवमेव विश्वम् ।
अन्योऽन्य वीक्षण समुत्सुकयो र्बभूव
कल्पान्तरप्रतिम एव तदा मुहूर्त्ता ॥ ४५

सौमित्रे· करयोर्विवेश्य सकलं तूणीरवाणासनं ।
सुग्रीवे च विभीषणे च विनते विन्यस्तहस्ताम्बुज· ।
अग्रे मारुति कथ्यमानसरणि. श्रीमान् रघूणा पति-
र्वैदेहीवसतीमशोकवनिकामासादयामासताम् ॥ ४६

सपदि रहितपार्श्वा यामिकीराक्षसीभिः-
परिहृत निगताभि - र्वेष्टितां स्वर्वधूभि ।
अपगत-घनजला तारकाभिः परीता
हिमरुच इव लेखा राघवस्तामपश्यत् ॥ ४७

स जटाजिन वल्कलैकधारी मलिना वेणीमती तथैव सीता ।
इतरेतर - दर्शनक्षणेऽस्मि - स्तदपि श्रीरुभयोर्वभूव काऽपि ॥ ४८

अथ निशिचरवासवासापवादविशुद्धये
जनकतनया दीप्तज्वालं प्रविश्य हुताशनम् ।
जय जय जगन्मात सीते पुनासि जगत्त्रया
मिति निगदता दिक्पालाना वचोभिरवातरत् ॥ ४९

आरुह्य पुष्पकमुपार्जितमात्मदोर्भ्यां
सुग्रीव - लक्ष्मण-विभीषण-सेव्यमान. ।
उत्सङ्ग एव विनिवेश्य वधूं विशुद्धां
प्रातिष्ठत प्रभुरय निज राजधानीम् ॥ ५०

सानन्दं दिवि पुष्पकेण विहरन् राम प्रियायै मुहु-
स्तत्तत् काननशैल सागर सरिन्मुन्याश्रमान् दर्शयन् ।
अन्योऽन्य परिभावयन् प्रतिपदं पूर्वानुभूता कथा -
साकेतोपवनं क्षणादिव तदा वीक्ष्याम्बभूतं प्रभुः ॥ ५१

कृत्वा मानुषविग्रहं कपिवरानारुह्य शाखामृगा-
रक्षोराजभटाश्चकाचनमणि-ज्योत्स्ना-विचित्रान् रथान् ।
आश्चर्यादिव निर्निमेषनयनै रालोक्यमाना सुरै
श्रीरामं रघुराजपत्तनपथं गच्छन्तमन्वगुययु ॥ ५२

पुर सरदरुन्धती सहचरं पुरी मानवै-
वृत च सरयूतटे स्थितममात्य वृद्धै समम् ।
रघूद्वहकथामुहु कथन नुन्नसामीरण (मात्र पारायण)
ददर्श भरत ततो जटिलमर्घपाणि प्रभु ॥ ५३

निस्तीर्णाना विपिन वसतिक्लेशसिन्धोरमीपा
मन्येषा तद्विरहजरुजा क्लाम्यता चानुवेलम् ।
सद्योयोग-व्यवहृतशुचा सान्द्र समोहभाजा
श्लाघ्य श्लाघ्य सखलु दिवस' कोऽप्यभूदन्य एव ॥ ५४

सीता समेत मनुजैस्त्रिभिरर्च्यमान-
मानन्दित प्रकृति पौरजनं समन्तात् ।
रामं ततस्त्रिदशा-दुन्दुभि-वन्दितेन-
राज्याभिषेक विधिना गुरुरभ्यषिञ्चत् ॥ ५५

अनुदिन मनुरागं वर्द्धयन्त्यापि तीव्रं
कथमपि विधियोगात् प्राप्तया विप्रयोगम् ।
पुनरपि मिलित· सन् प्रीतिमास्तत्र रेमे
दशवदनविरोधी सीतया च श्रिया च ॥ ५६

भास्वद् वंशमणे र्बभूव कपिल-क्षोणीपते-र्नन्दनो-
वीरः श्रीपुरुषोत्तमो गजपति र्भाग्यभुवो मूर्त्तिमत् ।
आकौमारदिनान्महाप्रियसुहृत्तस्या भवत् काश्यपः-
श्रीमान्मंगलदेव इत्यभिमतो गोष्ठीषु विद्यावताम् ॥ ५७

श्रीरुद्रे पुरुषोत्तमेन्द्र तनये प्रोद्दामदोर्मण्डल-
क्रीडाखण्डितशात्रवे वसुमती मासागरं शासति ।
श्रीमान् मङ्गलदेव सूनुरमनागाराध्य वाग्वादिनीं-
मार्कण्डेयकविस्तदेतदतनोत् काव्यं हरेः प्रीतये ॥ ५८

भोगाभोगमुरीकरोति धरणीं यावद्भुजङ्गेशितु-
र्लोकालोकगिरि प्रदक्षिणयते यावत्त्विषामीश्वरः ।
श्रीरामस्य गुणाम्बुधे र्गुणलवे नारब्धमेतन्नवं
काव्यं मे विदधातु तावदसकृत् प्रीति प्रसन्नात्मनाम् ॥ ५९

इति श्री काश्यपगोत्र समुद्भव श्रीमन्मगल देवदेहसम्भव मार्कण्डेयाभिध-
कविराजचक्र-चक्रवर्त्ति-विरचिते दशग्रीववधे महाकाव्ये
श्रीरामस्वपुराभिषेको नाम विंशतितमः सर्ग. ॥

